# अथ तृतीयोध्यायः ।

ओं विश्वा॑नि देव सवितर्दुरि॒ता॒नि॒ परा॑सुव । यद्भ॒द्रं तन्न॒ आसु॑व ।

अथ पञ्चर्चस्य षट्सप्ततितमस्य सूक्तस्य—

१–५ कविर्ऋषिः ॥ पवमानः सोमो देवता ॥ छन्दः—१ त्रिष्टुप् । २ विराड्जगती । ३, ५ निचृज्जगती । ४ पादनिचृज्जगती ॥ स्वरः—१ धैवतः । २–५ निषादः ॥

अथ द्युभ्वादीनामाधारत्वं वर्ण्यते ।

अथ परमात्माका सर्वाधाररूपसे वर्णन करते हैं ।

ध॒र्ता दि॒वः प॑वते॒ कृत्व्यो॒ रसो॒
दक्षो॑ दे॒वाना॑मनु॒माद्यो॒ नृभिः॑ ।
हरिः॑ सृजा॒नो अत्यो॒ न सत्व॑भि॒र्वृथा॒
पाजां॑सि कृणुते न॒दीष्वा ॥ १ ॥

ध॒र्ता । दि॒वः । प॒व॒ते॒ । कृत्व्यः॑ । रसः॑ । दक्षः॑ । दे॒वाना॑म् । अ॒नु॒ऽमाद्यः॑ । नृऽभिः॑ । हरिः॑ । सृ॒जा॒नः । अत्यः॑ । न । सत्व॑ऽभिः । वृथा॑ । पाजां॑सि । कृ॒णु॒ते॒ । न॒दीषु॑ । आ ॥ १ ॥

पदार्थः—( दिवः ) द्युलोकस्य ( धर्ता ) धारको जगदीश्वरः ( पवते ) मां पवित्रयतु । ( नृभिः ) सर्वैरपि जनैः-

( कृत्व्यः ) उपासनीयः । अथ च परमेश्वरः ( रसः ) आनन्द-स्वरूपस्तथा ( दक्षः ) सर्वज्ञः ( देवानामनुमाद्यः ) विदुषा-माह्लादकः ( हरिः ) पापहारकः परमात्मा ( सृजानः ) सर्वं सृजन् ( अत्योन ) विद्युदिव ( वृथा ) अनायासेनैव ( सत्वभिः ) प्राणिभिः ( पाजांसि ) बलानि ( कृणुते ) करोति । अथ च पूर्वोक्तः परमेश्वरः ( नदीषु ) प्रकृतेः सर्वासु शक्तिषु ( आ ) व्याप्नोति । उपसर्गश्रुतेर्योग्यक्रियाध्याहारः ॥

पदार्थ—(दिवः) द्युलोकका (धर्ता) धारणकर्ता परमात्मा (पवते) हमको पवित्र करे ( नृभिः ) सब मनुष्योंका ( कृत्व्यः ) जो उपास्य है तथा ( रसः ) आनन्द स्वरूप है, और ( दक्षः ) सर्वज्ञ है । ( देवाना मनुमाद्यः ) और विद्वानोंका आह्लादक है । ( हरिः ) उक्त गुणयुक्त पर-मात्मा (सृजानः) सम्पूर्ण सृष्टिकी रचना करता हुआ ( अत्योन ) विद्युत्के समान ( वृथा ) अनायास से ही ( सत्वभिः ) प्राणियों द्वारा ( पाजांसि ) बलोंको ( कृणुते ) करता है । और उक्त परमात्मा ( नदीषु ) प्रकृतिकी सम्पूर्ण शक्तियोंमें ( आ ) व्याप्त है ॥

भावार्थ—प्रत्येक प्राकृत-पदार्थमें परमात्माकी सत्ता विद्यमान है। और वही द्युलोकादिका अधिकरण है ॥१॥

शूरो न धत्त आयुधा गभस्त्योः
स्व१ःसिषासन्रथिरो गविष्टिषु ।
इन्द्रस्य शुष्ममीरयन्नपस्युभिरि-
न्दुर्हिन्वानो अज्यते मनीषिभिः ॥ २ ॥

शूरः । न । धत्ते । आयुधा । गभस्त्योः । स्व१रिति स्वः ।

सिसासन् । रथिरः । गोऽइष्टिषु । इन्द्रस्य । शुष्मं । ईरयन् ।
अपस्युऽभिः । इन्दुः । हिन्वानः । अज्यते । मनीषिऽभिः ॥२॥

पदार्थः—( इन्दुः ) सर्वप्रकाशकः परमेश्वरः ( मनीषिभिः ) ज्ञानयोगिभिः ( अज्यते ) साक्षात्क्रियते । तथा ( अपस्युभिः ) कर्मयोगिभिः (हिन्वानः) प्रेर्यमाणः अथच ( इन्द्रस्य ) कर्मयोगिनः ( शुष्मं ) बलं ( ईरयन् ) प्रेरयन् ( शूरोन ) शूरइव ( गभस्त्योः ) स्वकीयकर्मरूप-ज्ञानरूपशक्त्योः ( आयुधा ) सृष्टेः करणोपकरणरूपाण्यायुधानि ( धत्ते ) दधाति । (स्वः) सुखस्वरूपः परमात्मा ( गविष्टिषु ) प्रजासु ( सिषासन् ) संभक्तुमिच्छया ( रथिरः ) गतिस्वरूपः स परमात्मा स्वकीयगत्या सर्वत्र परिपूर्णो भवति ॥

पदार्थ—( इन्दुः ) सर्वप्रकाशक परमात्मा ( मनीषिभिः ) ज्ञानयोगियों द्वारा ( अज्यते ) ध्यानविषय किया जाता है । ( अपस्युभिः ) कर्मयोगियों द्वारा ( हिन्वानः ) प्रेरणा किया हुआ तथा ( इन्द्रस्य ) कर्मयोगीके ( शुष्मं ) बलको ( ईरयन् ) प्रेरणा करता हुआ ( शूरोन ) शूर-वीरके समान ( गभस्त्योः ) अपने कर्म और ज्ञानरूप शक्तिमें ( आयुधा ) सृष्टिके करणोपकरणरूप आयुधोंको ( धत्ते ) धारण करता है । ( स्वः ) वह सुखस्वरूप परमात्मा ( गविष्टिषु ) प्रजाओंमें ( सिषासन् ) विभाग करनेकी इच्छासे ( रथिरः ) गतिस्वरूप परमात्मा अपनी गतिसे सर्वत्र परिपूर्ण होता है ॥

भावार्थ—परमात्मा कर्मोंके फल देनेके अभिप्रायसे सर्वत्र सृष्टिमें अपनी न्यायरूपी-शक्तिसे सम्पूर्ण प्रजामें विराजमान होकर कर्मोंके यथायोग्य फल देता है ॥२॥

इन्द्रस्य सोम पवमान ऊर्मिणा
तविष्यमाणो जठरेष्वा विश।
प्र णः पिन्व विद्युदभ्रेव रोदसी धिया
न वाजाँ उप मासि शश्वतः॥ ३॥

इन्द्रस्य। सोम। पवमानः। ऊर्मिणा। तविष्यमाणः। जठरेषु। आ। विश। प्र। नः। पिन्व। विऽद्युत्। अभ्राऽइव। रोदसी इति। धिया। न। वाजान्। उप। मासि। शश्वतः॥३॥

पदार्थः—(सोम) हे परमात्मन्! (पवमानः) सर्वान्पवित्रयँस्त्वम् (ऊर्मिणा) स्वज्ञानतरङ्गैः (तविष्यमाणः) सर्वस्याभ्युदयमिच्छन् (इन्द्रस्य) कर्मयोगिनः (जठरेषु) अन्तःकरणेषु (आविश) आगत्य विराजस्व। अथच (विद्युत) विद्युत् (अभ्रेव) यथा मेघान् प्रकाशयति तथा (रोदसी) द्यावापृथिव्यौ बर्द्धयति। तथा (नः) अस्मान् (प्रपिन्व) बर्द्धय। अथ च (धिया) कर्मभिः (वाजान्) बलानि (न) साम्प्रतं (शश्वतः) निरन्तरं (उपमासि) निर्मिमीषे॥

पदार्थ—(सोम) हे परमात्मन्! (पवमानः) सबको पवित्र करते हुए आप तथा (ऊर्मिणा) अपनी ज्ञानकी लहरोंसे (तविष्यमाणः) सबकी वृद्धि चाहते हुए (इन्द्रस्य) कर्मयोगीके (जठरेष्वाविश) अन्तःकरणोंमें आकर विराजमान हों। और (विद्युत्) बिजली (अभ्रेव) जिस प्रकार मेघोंको प्रकाशित करती है, और (रोदसी) द्युलोक और पृथिवीलोकको वृद्धियुक्त करती है, उस प्रकार (नः) हमको आप (प्रपिन्व) वृद्धियुक्त करें। और (धिया) कर्मोंके द्वारा (वाजान्) बलोंको (शश्वतान) संप्रति निरन्तर (उपमासि) निर्माण करते हैं॥

**भावार्थ**—परमात्मा सत्कर्मों द्वारा मनुष्योंको इस प्रकार प्रदीप्त करता है, जिस प्रकार बिजली मेघमण्डलों और द्यु तथा पृथिवी लोकको प्रदीप्त करती है । इस लिये उसकी ज्ञानरूपी दीप्तिका लाभ करनेके लिये सदैव उद्यत रहना चाहिये ॥३॥

विश्वस्य राजा पवते स्वर्दृशं
ऋतस्य धीतिमृषिषाळवीवशत् ।
यः सूर्यस्यासिरेण मृज्यते पिता
मतीनामसमष्टकाव्यः ॥४॥

विश्वस्य । राजा । पवते । स्वःऽदृशः । ऋतस्य । धीतिं । ऋषिषाट् । अवीवशत् । यः । सूर्यस्य । असिरेण । मृज्यते । पिता । मतीनां । असमष्टऽकाव्यः ॥४॥

**पदार्थः**—( विश्वस्य राजा ) समस्तसंसारस्य प्रभुः परमात्मा ( पवते ) अस्मान्पवित्रयति ( ऋतस्य ) सत्यवक्तुः कर्मयोगिनः ( स्वर्दृशः ) सुखज्ञातुः ( धीतिं ) कर्म ( अवीविशत् ) वाञ्छति । स परमात्मा ( ऋषिषाट् ) सूक्ष्मात्सूक्ष्मतरोस्ति । तथा ( यः ) यः परमेश्वरः ( सूर्यस्य ) ज्ञानस्य ( असिरेण ) रश्मिभिः ( मृज्यते ) साक्षात्क्रियते । अथच ( मतीनां ) अखिलज्ञानानां ( पिता ) प्रदाता परमात्मा ( असमष्टकाव्यः ) वाचामगोचरोस्ति ॥

**पदार्थ**—( विश्वस्य राजा ) सम्पूर्ण संसारका राजा परमात्मा ( पवते ) हमको पवित्र करता है । ( ऋतस्य ) सत्यवक्ता कर्मयोगीका तथा-

( स्वर्दृशः ) सुखके ज्ञाताके ( धीतिं ) कर्मको ( अवीवशत् ) चाहता है । और परमात्मा ( ऋषिषाट् ) सूक्ष्मसे भी सूक्ष्म है । तथा ( यः ) जो परमात्मा ( सूर्यस्य ) ज्ञानकी रश्मियोंसे (मृज्यते ) साक्षात् किया जाता है । और ( मतीनां ) समस्त ज्ञानोंका ( पिता ) प्रदाता है । तथा ( असमष्टकाव्यः ) जो कवियोंकी वाणीसे परे है ॥

भावार्थ—परमात्मा सब ज्ञानोंका केन्द्र है । और उसको कोई ज्ञानविषय नहीं कर सकता । इस लिये वह अतीन्द्रिय है । अर्थात् "यतो-वाचो निवर्तन्ते अप्राप्यमनसा सह" उसको वाणी और मन दोनों ही विषय नहीं कर सकते । अर्थात् वह वाणीका लक्ष्यार्थ है, वाच्यार्थ नहीं ॥ ४ ॥

वृषे॑व यू॒था परि॒ कोश॒मर्ष॒स्य-
पामु॒पस्थे॑ वृष॒भः कनि॑क्रदत् ।
स इन्द्रा॑य पवसे मत्स॒रिन्त॑मो
य॒था जेषा॑म समि॒थे त्वोत॑यः ॥५॥

वृषा॑ऽइव । यू॒था । परि॑ । कोश॑म् । अर्ष॑सि । अ॒पाम् । उ॒पऽस्थे॑ । वृ॒ष॒भः । कनि॑क्रदत् । सः । इन्द्रा॑य । प॒व॒से॒ । म॒त्स॒रिन्ऽत॑मः । य॒था । जेषा॑म । स॒म्ऽइ॒थे । त्वाऽऊ॑तयः ॥५॥

पदार्थः—( त्वोतयः ) भवता सुरक्षिता वयं ( यथा ) येन प्रकारेण ( समिथे ) संग्रामे ( जेषाम ) जयेम तथा भवान्करोतु । ( सः ) सः ( मत्सरिन्तमः ) आनन्ददायकस्त्वम् ( इन्द्राय ) कर्मयोगिने ( पवसे ) पवित्रयसि । ( वृषा ) कामनावर्षकाणां ( यूथेव ) समूह इव ( कोशं ) ऐश्वर्यस्य कोशं ( पर्यर्षसि ) प्राप्नोषि ।

यथा ( अपामुपस्थे ) जलाभिमुखं ( वृषभः ) मेघमण्डलं ( कनिक्रदत् ) शब्दं कृत्वा प्राप्नोति तद्वत् ॥

पदार्थ—( त्वोतयः ) आपसे सुरक्षित होते हुए ( यथा ) जैसे ( समिथे ) संग्राममें ( जेषाव ) हम जीतें वैसा आप करें। ( सः ) वह ( मत्सरिन्तमः ) आनन्दके प्रदाता आप ( इन्द्राय ) कर्मयोगीके लिये ( पवसे ) पवित्रता प्रदान करते हैं। आप ( वृषा ) कामनाओंके ( यूथेव ) दातृगणके समान ( कोशं ) ऐश्वर्यके कोशको ( पर्यर्षसि ) प्राप्त होतेहैं। जिस प्रकार ( अपामुपस्थे ) जलोंके समीप ( वृषभः ) मेघमण्डल ( कनिक्रदत् ) गर्ज कर प्राप्त होता है॥

भावार्थ—परमात्मा हमारे ज्ञान-विज्ञानादि कोशोंकी रक्षा करनेवाला है, और वह उद्योगी और कर्मयोगियोंको सदैव पवित्र करता है।

इति षट्सप्ततितमं सूक्तं प्रथमोवर्गश्च समाप्तः ॥

यह ७६ वां सूक्त और पहिला वर्ग समाप्त हुआ ॥

---

अथ पञ्चर्चस्य सप्तसप्ततितमस्य सूक्तस्य—

१—५ कविर्ऋषिः ॥ पवमानः सोमो देवता ॥ छन्दः—१ जगती । १, ४, ५ निचृज्जगती ॥ निषादः स्वरः ॥

अथ वाचां सदाचारो वर्ण्यते ।

अब वाणियोंका सदाचार वर्णन करते हैं ।

एष प्र कोशे मधुमाँ अचिक्रददिन्द्रस्य वज्रो वपुषो वपुष्टरः ।

अभीमृतस्य सुदुघा घृतश्चुतो
वाश्रा अर्षन्ति पयसेव धेनवः ॥१॥

एषः। प्र। कोशे। मधुऽमान्। अचिक्रदत्। इन्द्रस्य। वज्रः। वपुषः। वपुःऽतरः। अभि। ईम्। ऋतस्य। सुऽदुघाः। घृतऽश्चुतः। वाश्राः। अर्षन्ति। पयसाऽइव। धेनवः ॥१॥

**पदार्थः**—( वाश्राः ) शब्दवत्यः ( धेनवः ) वाण्यः याः ( पयसेव ) जलप्रवाह इव ( अभ्यर्षन्ति ) अभिगच्छन्ति ताः ( ई ) अस्य ( ऋतस्य ) सत्यस्य ( सुदुघाः ) दोग्ध्र्यः सन्ति। तथा ( घृतश्चुतः ) माधुर्यदात्र्यः सन्ति। ( एषः ) उक्तः परमेश्वरः ( कोशे ) अन्तःकरणे ( मधुमान् ) आनन्दरूपेण वर्तमानः सन् ( प्राचिक्रदत् ) साक्षित्वेनोपदिशति। स ( वपुष्टरः ) सर्वेषामादिबीजमस्ति। तथा ( इन्द्रस्य ) कर्मयोगिनः ( वपुषः ) शरीरस्य ( वज्रः ) वज्रोऽस्ति ॥

**पदार्थ**—( वाश्राः ) शब्द करती हुई ( धेनवः ) वाणियें जो (पयसेव) जल प्रवाहके समान ( अभ्यर्षन्ति ) चलतीं हैं, वे वाणीयें ( ई ) इस ( ऋतस्य ) सत्यकी ( सुदुघाः ) दोहन करने वाली हैं। और ( घृतश्चुतः ) माधुर्यको देने वालीं हैं। ( एषः ) उक्त परमेश्वर ( कोशे ) अन्तःकरणमें ( मधुमान् ) आनन्द-रूपसे वर्तमान परमात्मा ( प्राचिक्रदत् ) साक्षीरूपसे उपदेश करता है। और वह ( वपुष्टरः ) सबका आदिबीज है, तथा ( इन्द्रस्य ) कर्मयोगीके ( वपुषः ) शरीरका ( वज्रः ) वज्र है ॥

**भावार्थ**—सब सचाइयोंका आश्रय एकमात्र वाणी है। जो पुरुष वाणीको मीठी और सब कामनाओंकी दोहन करने वाली बनाते हैं, वे इस संसारमें सदैव सुख लाभ करते हैं ॥१॥

स पूर्व्यः पवते यं दिवस्परि
श्येनो मथायदिषितस्तिरो रजः।
स मध्व आ युवते वेविजान
इत्कृशानोरस्तुर्मनसाह बिभ्युषा ॥२॥

सः। पूर्व्यः। पवते। यं। दिवः। परि। श्येनः। मथायत्। इषितः। तिरः। रजः। सः। मध्वः। आ। युवते। वेविजानः। इत्। कृशानोः। अस्तुः। मनसा। अह। बिभ्युषा ॥२॥

पदार्थः—(सः) असौ परमेश्वरः (पूर्व्यः) अनादिरस्ति। तथा (पवते) पावित्रयति। यः (रजः) प्रकृते रजोगुणं (तिरः) तिरस्कृत्य (परिमथायत्) सर्वान्मश्नाति (सः) अयं परमात्मा (मध्वः) मधुरूपोस्ति। तथा (आयुवते) परमाणुरूपप्रकृतिं मिथोमेलयति च। अथ च (वेविजानः) गतिशीलोस्ति (कृशानोः) स्वीयतेजोरूपशक्त्या (अस्तु) आक्षेपकारिजनेभ्यः (मनसा) आत्मीयमननरूपबलेन (बिभ्युषा) भयं ददाति॥

पदार्थ—(सः) पूर्वोक्त परमात्मा (पूर्व्यः) अनादि है। और (पवते) सबको पवित्र करता है। जो (रजः) प्रकृतिके रजोगुणको (तिरः) तिरस्कार करके (परिमथायत्) सबको मथन करता है (सः) वह (मध्वः) मधुरूप है। और (आयुवते) परमाणुरूप प्रकृतिको आपसमें मिलाने वाला है। (वेविजानः) गतिशील है। (कृशानोः) अपनी तेजरूप-शक्तिसे (अस्तु) आक्षेप्ता-पुरुषोंको (मनसा) अपनी मननरूप-शक्तिसे (बिभ्युषा) भयको देने वाला है।

भावार्थ—परमात्मा प्रकृतिके रजोरूप-परमाणुओंका संयोग करके इस सृष्टिको उत्पन्न करता है ॥ २ ॥

ते नः पूर्वास उपरास इन्दवो
महे वाजाय धन्वन्तु गोमते ।
ईक्षेण्यासो अह्योऽन चारवो
ब्रह्मब्रह्म ये जुजुषुर्हविर्हविः ॥३॥

ते । नः । पूर्वासः । उपरासः । इन्दवः । महे । वाजाय । धन्वन्तु । गोऽमते । ईक्षेण्यासः । अह्यः । न । चारवः । ब्रह्मऽब्रह्म । ये । जुजुषुः । हविःऽहविः ॥३॥

पदार्थः—(ते) पूर्वोक्ता विद्वांसो ये (नः) अस्माकं (पूर्वासः) पूर्वजाः सन्ति तथा (उपरासः) ये भविष्यन्ति ते (इन्दवः) ज्ञानिनः (महे गोमते) महते ज्ञानाय अथच (वाजाय) बलाय (धन्वन्तु) तं परमात्मानं प्राप्नुवन्तु। अथ च (ये) ये (ब्रह्म ब्रह्म) ब्रह्मप्राप्तये (हविर्हविः) तथा हविष्यार्थं (जुजुषुः) संसेवन्ते ते (चारवोन) श्रेष्ठजना इव (अह्यः) सुरूपाः (ईक्षेण्यासः) दर्शनीयाश्च भवन्ति ॥

पदार्थ—(ते) पूर्वोक्त विद्वान् (नः) जो हमारे (पूर्वासः) पूर्वज (उपरासः) और जो भविष्यमें होने वाले हैं (इन्दवः) वे ज्ञानी (महे-गोमते) बड़े ज्ञानके लिये और (वाजाय) बलके लिये (धन्वन्तु) उस परमात्माको प्राप्त हों। और (ये) जो (ब्रह्म ब्रह्म) ब्रह्मप्राप्तिके लिये और (हविर्हविः) हविके लिए (जुजुषुः) सेवन करते हैं, वे (चारवः) श्रेष्ठ लोगोंके (न) समान (अह्यः) सुन्दर और (ईक्षेण्यासः) दर्शनीय होते हैं।

भावार्थ—प्राचीन और अर्वाचीन अर्थात् पुराने और नये दोनों प्रकारके विद्वान् जो वेदको ईश्वर-प्राप्तिके लिये पढ़ते हैं, और हवनादि यज्ञोंको कर्म्मकाण्डके लिये करते हैं, वे इस संसारमें दर्शनीय और सदाचार फैलानेके हेतु होते हैं। अन्य नहीं ॥ ३ ॥

अयं नो विद्वान्वनवद्वनुष्यत
इन्दुः सत्राचा मनसा पुरुष्टुतः ।
इनस्य यः सदने गर्भमादधे
गवामुरुब्जमभ्यर्षति व्रजम् ॥४॥

अयं । नः । विद्वान् । वनवत् । वनुष्यतः । इन्दुः । सत्राचा । मनसा । पुरुऽस्तुतः । इनस्य । यः । सदने । गर्भं । आऽदधे । गवां । उरुब्जं । अभि । अर्षति । व्रजं ॥४॥

पदार्थः—(अयं) असौ यः (नः) अस्माकं मध्ये (विद्वान्) मनीष्यस्ति सः (वनुष्यतः) अस्माकं शत्रून् (सत्राचा मनसा) समाहितमनसा (वनवत्) नाशयतु। स परमात्मा (इन्दुः) प्रकाशस्वरूपोस्ति। तथा (पुरुष्टुतः) मान्योस्ति (यः) योजनः (इनस्य) ईश्वरस्य (सदने) सन्निधौ (गर्भं) शिक्षां (आदधे) दधाति सः (गवां) इन्द्रियाणां (व्रजं) फलानि (उरुब्जं) यानि श्रेष्ठतराणि सन्ति तानि (अभ्यर्षति) प्राप्नोति ॥

पदार्थ—(अयं) यह जो (नः) हमारे मध्यमें विद्वान् है, वह (वनुष्यतः) हमारे शत्रुओंको (सत्राचा मनसा) समाहित मनसे नाश कर सकता है। और वह (इन्दुः) प्रकाश-स्वरूप है (पुरुष्टुतः) तथा मान-

नीय है। (यः) जो पुरुष (इनस्य) ईश्वरकी (सदने) सन्निधिमें (गर्भं) शिक्षाको (आदधे) धारण करता है, वह (गवां) इन्द्रियोंके (व्रजं) फलको (उरुज्जं) जो सर्वोपरि है, उसको (अभ्यर्षति) प्राप्त होता है।

भावार्थ—जो विद्वान् ईश्वरीयज्ञान पर विश्वास करता है, वह मनुष्य-जन्मके फलको लाभ करता है॥४॥

चक्रिर्दिवः पवते कृत्व्यो रसो
महाँ अदब्धो वरुणो हुरुग्यते।
असावि मित्रो वृजनेषु यज्ञियोऽत्यो
न यूथे वृषयुः कनिक्रदत्॥५॥२॥

चक्रिः। दिवः। पवते। कृत्व्यः। रसः। महान्। अदब्धः। वरुणः। हुरुक्। यते। असावि। मित्रः। वृजिनेषु। यज्ञियः। अत्यः। न। यूथे। वृषऽयुः। कनिक्रदत्॥५॥

पदार्थः—(चक्रिः) स पुरुषः अनुष्ठानपरायणोभवति तथा (दिवः) द्युलोकं (पवते) पावित्रयति च। अथच (कृत्व्यः) कर्तव्यशीलः (रसः) आमोदरूपः (महान्) बृहत् (अदब्धः) अदम्भनीयः परमेश्वरः (हुरुग्यते) कुटिलजनं (वरुणः) स्वीयविद्याबलेनाच्छादयति। तथा (असावि) ज्ञान-बलमुत्पादयति। (मित्रः) सर्वेभ्यः प्रियोस्ति। (वृजिनेषु) सर्वत्र (अत्यः) गन्तु शक्नोति। अथ च (यज्ञियः) यज्ञकर्मसु योग्यः (वृषयुः) सर्वासां कामनानां (यूथे) वर्षकगणः (न) इव (कनिक्रदत्) गर्जन् अस्मिन्संसारे यात्रां करोति॥

**पदार्थ**—( चक्रिः ) वह पुरुष अनुष्ठान-परायण होता है । और ( दिवः ) द्युलोकको ( पवते ) पवित्र करता है । ( कृत्व्यः ) और कर्तव्यशील ( रसः ) आनन्द-स्वरूप ( महान् ) बड़ा ( अदब्धः ) किसीसे न दवाये जाने वाला परमेश्वर ( हुरुग्यते ) कुटिलतासे चलने वाले पुरुषको ( वरुणः ) अपने विद्याबलसे अच्छादन करता है । और ( असावि ) ज्ञान-रूपी बलको उत्पन्न करता है ( मित्रः ) सर्व मित्र है ( वृजनेषु अत्यः ) सब विषयोंमें गमन कर सकता है । और ( याज्ञियः ) यज्ञसम्बन्धी कर्मों-में योग्य ( वृषयुः ) सब कामनाओंके ( यूथ ) देने वाले गणके ( न ) समान ( कनिक्रदत् ) गर्जता हुआ, इस संसारमें यात्रा करता है ॥

**भावार्थ**—जो विद्वान् धीर-बीर दृढव्रती और अपने विद्याप्र-भावसे कुटिल वा मायावी पुरुषोंको दबानेकी शक्ति रखता है । वह इस मनुष्य समाजमें वृषभके समान गर्जता हुआ, अपने सदाचारी-समाजकी रक्षा करता है ॥ ५ ॥

इति सप्तसप्ततितमं सूक्तं द्वितीयोवर्गश्च समाप्तः ।

यह ७७ वां सूक्त और २सरा वर्ग समाप्त हुआ ।

---

अथ पञ्चर्चस्याष्टसप्ततितमस्य सूक्तस्य—

१—५ कविर्ऋषिः ॥ पवमानः सोमो देवता ॥ छन्दः—१, निचृज्जगती ॥ निषादः स्वरः ॥

अथ सर्वनियामकस्येश्वरस्यैश्वर्यमुपादिश्यते ।

अब सर्वनियामक परमात्माके ऐश्वर्यका उपदेश करते हैं ।

प्र राजा वाचं जनयन्नसिष्यदद्पो
वसानो अभि गा इयक्षति ।

गृभ्णाति रिप्रमविरस्य तान्वा
शुद्धो देवानामुप याति निष्कृतम् ॥१॥

प्र। राजा। वाचं। जनयन्। असिस्यदत्। अपः। वसानः। अभि। गाः। इयक्षति। गृभ्णाति। रिप्रं। अविः। अस्य। तान्वा। शुद्धः। देवानां। उप। याति। निः ऽकृतं ॥१॥

पदार्थः—(राजा) सर्वप्रकाशकोजगदीशः (वाचं) वेदवाणीं (जनयन्) उत्पादयन् (प्रासिष्यदत्) संसारमुत्पादयति। अथ च (अपः) कर्माणि (वसानः) दधानः (गाः) पृथिव्यादिलोकानां (अभि) सम्मुखं (इयक्षति,) गतिं करोति। यः पुरुषः (अस्य) परमेश्वरस्य (तान्वा) शक्त्या (रिप्रं) स्वकीयदोषान् (गृभ्णाति) मार्ष्टि अर्थात् दोषत्वेन गृह्णाति। एवं प्रकारेण (अविः) सुरक्षितः सन् (शुद्धः) पवित्रोस्ति (देवानां) देवतानां (निष्कृतं) स्थानं (उपयाति) प्राप्नोति ॥

पदार्थ—(राजा) सबका प्रकाशक परमात्मा (वाचं) वेदरूपीवाणीको (जनयम्) उत्पन्न करता हुआ (प्रासिष्यदत्) संसारको उत्पन्न करता है। और (अपः) कर्मोंको (वसानः) धारण करता हुआ (गाः) पृथिव्यादि-लोक-लोकान्तरोंके (अभि) सम्मुख (इयक्षति) गति करता है। जो पुरुष (अस्य) उस परमात्माकी (तान्वा) शक्तिसे (रिप्रं) अपने दोषोंको (गृभ्णाति) ग्रहण कर लेता है, अर्थात् उनको समझ कर मार्जन करलेता है, इस प्रकार (अविः) सुरक्षित होकर (शुद्धः)-शुद्ध है तथा (देवानां) देवताओंके (निष्कृतं) पदको (उपयाति) प्राप्त होता है॥

**भावार्थ**—जो पुरुष परमात्माके जगत्कर्तृत्वमें विश्वास करता है, वह उसकी उपासना द्वारा शुद्ध होकर देव-पदको प्राप्त होता है ॥१॥

इन्द्राय सोम परि षिच्यसे
नृभिर्नृचक्षा ऊर्मिः कविरज्यसे वने ।
पूर्वीर्हि ते स्रुतयः सन्ति
यातवे सहस्रमश्वा हरयश्चमूषदः ॥२॥

इन्द्राय । सोम । परि । सिच्यसे । नृऽभिः । नृऽचक्षाः । ऊर्मिः । कविः । अज्यसे । वने । पूर्वीः । हि । ते । स्रुतयः । सन्ति । यातवे । सहस्रं अश्वाः । हरयः । चमूऽसदः ॥२॥

**पदार्थः**—( वने ) भक्तिमार्गे ( कविः ) सर्वज्ञः परमेश्वरः (नृभिः) मनुष्यैः (अज्यसे) उपासितो जगदीशः ( नृचक्षाः ) सर्वान्तर्याम्यस्ति ( ऊर्मिः ) आनन्दसमुद्ररूपोस्ति च । ( सोम ) हे जगन्नियन्तः ! भवान् ( इन्द्राय ) कर्मयोगिने ( परिषिच्यसे ) लक्ष्यरूपेण निर्मितः ( ते ) तव ( स्रुतयः) शक्तयः ( हि ) यतः ( पूर्वीः ) प्राचीनाः सन्ति । ( यातवे ) गमनशीलाय कर्मयोगिने ( सहस्रं ) बहुविधासु ( अश्वाः ) गतिशीलासु ( चमूषदः ) सेनासु स्थित्वा ( हरयः ) विनाशं धारयन्त्यः ( सन्ति ) कर्मयोगिनं प्राप्नुवन्ति ॥

**पदार्थ**—( वने ) भक्तिके मार्गमें ( कविः ) सर्वज्ञ परमात्मा ( नृभिः ) मनुष्योंके द्वारा ( अज्यसे ) उपासना किया जाता है । वह ( नृचक्षाः ) सबका अन्तर्यामी है । ( ऊर्मिः ) आनन्दका समुद्र है । ( सोम )

हे परमात्मन् ! आप (इन्द्राय) कर्मयोगीके लिये (परिषिच्यसे) लक्ष्य-बनाये गये हो । (ते) तुम्हारी [सुतयः) शक्तियें (हि) क्योंकि (पूर्वीः) सनातन हैं। (यातवे) गतिशील कर्मयोगीके लिये (सहस्रं) अनन्त प्रकार-की (अश्वाः) गतिशील (चमूषदः) सेनामें स्थिर होकर (हरयः) विनाशको धारण करतीं हुई (सन्ति) कर्मयोगीको प्राप्त होतीं हैं ॥

**भावार्थ**—जो लोग परमात्माकी भक्तिमें विश्वास करते हैं, परमात्मा उनके बलको अवश्यमेव बढ़ाता है। अर्थात् उत्पत्ति, स्थिति और संहार-रूप परमात्माकी शक्तियें कर्मयोगियोंकी आज्ञा-पालन करनेके लिये आ उपस्थित होती हैं ॥२॥

समुद्रियां अप्सरसो मनीषिणमा-
सीना अन्तरभि सोममक्षरन् ।
ता ईं हिन्वन्ति हर्म्यस्य सक्षणिं
याचन्ते सुम्नं पवमानमक्षितम् ॥३॥

समुद्रियाः । अप्सरसः । मनीषिणं । आसीनाः । अंतः । अभि । सोमं । अक्षरन् । ताः । ईं । हिन्वन्ति । हर्म्यस्य । सक्षणिं । याचंते । सुम्नं । पवमानं । अक्षितं ॥३॥

**पदार्थः**—(सोममभि) परमात्मनः समक्षं (समुद्रिया आसीना अप्सरसः) अन्तरिक्षस्य स्थिरशक्तयः (अक्षरन्) क्षरन्त्यःसत्यः (मनीषिणं) मनस्विनं पुरुषं (अन्तः) अन्तःकरणे उद्बोधयन्ति। (ताः) शक्तयः (ईं) अमुं (हिन्वन्ति) प्रेरयन्ति। अथ च उक्तपरमात्मनः सकाशात् (हर्म्यस्य) अखिलसौन्दर्य-साधनभूतं (सक्षणिं) समस्तापत्तिसंहारकं (पवमानं) पावकं (अक्षितं) क्षयरहितं पदमुपासकाः (याचन्ते) प्रार्थयन्ते ॥

**पदार्थ**—(सोममभि) परमात्माके समक्ष (समुद्रिया आसीना अप्सरसः) अन्तरिक्षकी स्थिर-शक्तियें (अक्षरन्) क्षरण करती हुई (मनीषिणं) मनस्वी पुरुषके (अन्तः) अन्तःकरणमें उद्बोधन करतीं हैं। (ताः) वे शक्तियें (ईं) इसको (हिन्वन्ति) प्रेरणा करतीं हैं। और उक्त परमात्मासे (हर्म्यस्य) सब सौन्दर्योंके साधन तथा (सक्षणिं) सब आपत्तियोंके संहारने वाले (पवमानं) सबको पवित्र करने वाले (अक्षितं) क्षयरहित पदकी (याचन्ते) उपासक लोग याचना करते हैं ॥

**भावार्थ**—विद्युदादि अनन्तशक्तियें जो अन्तरिक्षमें स्थिर हैं, उसी अनन्त-शक्तिमद्ब्रह्मसे लोग अक्षय-पदकी याचना करते हैं ॥३॥

गोजिन्नः सोमो रथजिद्धिरण्य-
जित्स्वर्जिदब्जित्पवते सहस्रजित् ।
यं देवासश्चक्रिरे पीतये मदं
स्वादिष्ठं द्रप्समरुणं मयोभुवम् ॥४॥

गोऽजित् । नः । सोमः । रथऽजित् । हिरण्यऽजित् । स्वःऽजित् । अप्ऽजित् । पवते । सहस्रऽजित् । यं । देवासः । चक्रिरे । पीतये । मदं । स्वादिष्ठं । द्रप्सं । अरुणं । मयःऽभुवं ॥४॥

**पदार्थः**—(सोमः) परमेश्वरः (गोजित्) नानाविधसूक्ष्माऽतिसूक्ष्मशक्तिजेताऽस्ति । तथा (रथजित्) महावेगवन्तमपि पदार्थं जयति । अथ च (हिरण्यजित्) महतीमपि शोभामभिभवति । तथा (स्वर्जित्) सकलसुख-विजयकर्ताऽस्ति तथा (अब्जित्) महान्तमपि वेगं विजयते अथच (सहस्रजित्) असंख्यवस्तुविजे-

तास्ति । (यं) इमं (मदं) आह्लादकं (स्वादिष्ठं) ब्रह्मानन्ददं (द्रप्सं) रसस्वरूपं (अरुणं) प्रकाशरूपं (मयोभुवं) सुखदं परमात्मानं (देवासः) दिव्यगुणवन्तोविद्वज्जनाः (नः) अस्माकं (पीतये) तृप्तये (चक्रिरे) व्याख्यानं कुर्वते ॥

**पदार्थ**—(सोमः) परमात्मा (गोजित्) सब प्रकारकी सूक्ष्मशक्तियोंको जीतने वाला है । तथा (रथजित्) बड़ेसे बड़े वेग वाले पदार्थको जीतने वाला है । और (हिरण्यजित्) बड़ी बड़ी शोभाओंको जीतने वाला है । तथा (स्वर्जित्) सब सुखोंको जीतने वाला है । और (अब्जित्) बड़े २ वेगको जीतने वाला है । तथा (सहस्रजित्) अनन्त पदार्थोंको जीतने वाला है (यं) जिस (मदं) आह्लादक (स्वादिष्ठं) ब्रह्मानन्द देने वाले (द्रप्सं) रसस्वरूप (अरुणं) प्रकाशस्वरूप (मयोभुवं) सुख देने वाले परमात्माका (देवासः) विद्वद्गण (नः) हमारी (पीतये) तृप्तिके लिये (चक्रिरे) व्याख्यान करते हैं ॥

**भावार्थ**—परमात्माके आगे इस संसारकी सब शक्तियें तुच्छ हैं । अर्थात् वह सर्वविजयी है । उसीसे विद्वान् लोग नित्यसुखकी प्रार्थना करते हैं ॥४॥

एतानि सोम पवमानो अस्मयुः
सत्यानि कृण्वन्द्रविणान्यर्षसि ।
जहि शत्रुमन्तिके दूरकेच य
उर्वीं गव्यूतिमभयञ्च नस्कृधि ॥५॥३॥

एतानि । सोम । पवमानः । अस्मऽयुः । सत्यानि । कृण्वन् । द्रविणानि । अर्षसि । जहि । शत्रुं । अंतिके । दूरके । च । यः । उर्वीं । गव्यूतिं । अभयं । च । नः । कृधि ॥५॥

पदार्थः—(सोम) हे जगदीश ! (पवमानः) पवित्रः तथा (अस्मयुः) अस्मद्धितचिन्तकस्त्वं (सत्यानि कृण्वन्) सदुपदिशन् (एतानि) पूर्वोक्तान्यखिलानि (द्रविणानि) ऐश्वर्याणि (अर्षसि) ददासि (अथच) ये मम (अन्तिके) समीपे (च) तथा (दूरके) दूरवर्तिनः (शत्रुं) शत्रवः सन्ति तान् (जहि) मारय (यः) योहि (उर्वी) विस्तृतः (गव्यूतिः) मार्गोस्ति तं मदर्थमनवरुद्धं कुरु । अथच (नः) अस्मान् (अभयं) भयरहितान् (कृधि) कुरु ॥

पदार्थ—(सोम) हे परमात्मन् ! (पवमानः) पवित्र (अस्मयुः) हमारे शुभकी इच्छा करने वाले आप (सत्यानि) सदुपदेशोंको (कृण्वन्) करते हुए (एतानि) पूर्वोक्त समस्त (द्रविणानि) ऐश्वर्योंको (अर्षसि) देते हैं। और जो हमारे (अन्तिके) समीपवर्ती (च) तथा (दूरके) दूरवर्ती (शत्रुं) शत्रु हैं, उनको आप (जहि) नाश करें। (यः) जो (उर्वी) विस्तृत (गव्यूतिः) मार्ग है, उसे हमारे लिये खोल दें। और (नः) हमको (अभयं) भयरहित (कृधि) कर दीजिये ॥

भावार्थ—शत्रुसे तात्पर्य यहाँ अन्यायकारी-मनुष्योंका है। वे मनुष्य दूरवर्ती वा निकटवर्ती हों उन सबके नाशकी प्रार्थना इस मन्त्रमें परमात्मासे की गयी है ॥५॥

इत्यष्टसप्ततितमं सूक्तं तृतीयोवर्गश्च समाप्तः ॥

यह ७८ वां सूक्त और ३सरा वर्ग समाप्त हुआ।

अथ पञ्चर्चस्यैकोनाशीतितमस्य सूक्तस्य—

१–५ कविर्ऋषिः ॥ पवमानः सोमो देवता ॥ छन्दः—१, ३ पादनिचृज्जगती । २, ४, ५ निचृज्जगती ॥ निषादः स्वरः ॥

अचोदसो नो धन्वन्त्विन्दवः प्र
सुवानासो बृहद्दिवेषु हरयः ।
वि च नशन्न इषो अरातयोऽर्यो
नशन्त सनिषन्त नो धियः ॥१॥

अचोदसः । नः । धन्वंतु । इंदवः । प्र । सुवानासः । बृहत्ऽदिवेषु । हरयः । वि । च । नशन् । नः । इषः । अरातयः । अर्यः । नशंत । सनिषंत । नः । धियः ॥१॥

पदार्थः—(अचोदसः) स्वतन्त्रः परमात्मा (नः) अस्मान् (प्रधन्वन्तु) प्राप्नोतु स (इन्दवः) स परमेश्वरः (सुवानासः) सर्वोत्पादकः (हरयः) हरणशीलः (बृहत दिवेषु) बृहद् यज्ञेषु अस्मान् रक्षतु (च) किञ्च ये (नः) अस्माकं (इषोऽरातयः) ऐश्वर्य्यस्य विनाशकाः (अर्य्यः) शत्रवः तान् (विनशन्) नाशयतु (नः) अस्माकं (नशतं) विनश्यन्तु (नोधियः) यान्यस्माकं कर्म्माणि तानि (सनिषन्त) शोधयन्तु अत्र बहुलं छन्दसीत्यनेन सूत्रेण बहुवचनस्य स्थाने एकवचनम् ।

पदार्थ—(अचोदसः) स्वतन्त्रपरमात्मा जो किसीसे प्रेरणा नहीं किया जाता वह (नः) हमको (प्रधन्वन्तु) प्राप्त हो । वह परमात्मा

(इन्दवः) सर्वैश्वर्य्ययुक्त है । और (सुवानासः) सर्वोत्पादक है (हरयः) दुष्टोंके हरण करने वाला है (बृहत् दिवेषु) आध्यात्मिकादि तीनों प्रकारके यज्ञोंमें हमारी रक्षा करे (च) और (इषोऽरातयः) हमारे ऐश्वर्य्यके विनाशक (अर्य्यः) शत्रुओंको (विनशन्) नाश करके (नः) हमको ऐश्वर्य्य दे । और (नोधियः) हमारे कर्म्मोंको (सनिषन्त) शुद्ध करे ।

भावार्थ—जो लोग परमात्मपरायण होकर अपने कर्म्मोंका शुभ-रीतिसे अनुष्ठान करते हैं, परमात्मा उनकी सदैव रक्षा करते हैं । अर्थात् वे लोग आध्यात्मिक आधिभौतिक तथा आधिदैविक तीनों प्रकारके यज्ञोंसे अपनी तथा अपने समाजकी उन्नति करते हैं ॥१॥

प्र णो धन्वन्त्विन्दवो मदच्युतो धना<br>
वा येभिरर्वतो जुनीमसि ।<br>
तिरो मर्तस्य कस्य चित्परिह्वृतिं<br>
वयं धनानि विश्वधा भरेमहि ॥२॥

प्र । नः । धन्वंतु । इंदवः । मदऽच्युतः । धना । वा । येभिः । अर्वतः । जुनीमसि । तिरः । मर्तस्य । कस्य । चित् । परिऽह्वृतिं । वयं । धनानि । विश्वधा । भरेमहि ॥२॥

पदार्थः—(मदच्युतः) आनन्दप्रदः (इन्दवः) प्रकाशस्वरूपः परमात्मा (नः) अस्माकं (प्रधन्वन्तु) प्रागच्छन्तु (वा) अथवा (धना) धनानि प्रददातु (येभिः) यैर्धनैः (अर्वात) बलवच्छत्रुःसमीपं गत्वा (जुनीमसि) जयामः (कस्याचित् मर्तस्य) कस्यापिमनुष्यस्य (तिरः) तिरस्कारं कृत्वा (वयं) ईश्वरोपासकः (धनानि) गोहिरण्यरूपाणि (विश्वधा) सर्वदा (भरेमहि) न धारयामः ॥

**पदार्थ**—(मदच्युतः) सबको आनन्द देने वाला परमात्मा (इन्दवः) जो प्रकाश-स्वरूप है वह (नः) हमको (प्रधन्वन्तु) प्राप्त हो (वा) अथवा (धना) गोहिरण्यरूपधन हमको प्रदान करे (येभिः) जिन धनों-से हम (अर्वता) बल वाले शत्रुओं को (जुनीमसि) जीतें (कस्यचित्) किसीके (मर्तस्य) मनुष्यका (तिरः) तिरस्कार करके (परिहृतिं) पीडा देकर (वयं) हम लोग (धनानि) धनोंको (विश्वधा) सदैव (भरेमहि) धारण न करे॥

**भावार्थ**—मनुष्य को परमात्मा से सदैव इस प्रकार के बलकी याचना करनी चाहिये कि वह किसी मनुष्य को अन्याय से पीडा देकर धनका संग्रह न करे किन्तु यदि धन संग्रह की इच्छा हो तो वह अपने शत्रुओं को पराजय करके धनका लाभ करे॥२॥

उत स्वस्या अरात्या अरिर्हि
ष उतान्यस्या अरात्या वृको हि षः।
धन्वन्न तृष्णा समरीत ताँ अभि
सोम जहि पवमान दुराध्यः॥३॥

उत। स्वस्याः। अरात्याः। अरिः। हि। सः। उत। अन्यस्याः। अरात्याः। वृकः। हि। सः। धन्वन्। न। तृष्णा। सं। अरीत। तान्। अभि। सोम। जहि। पवमान। दुःऽआध्यः॥३॥

**पदार्थः**—(उत) अथवा (स्वस्याअरात्याः) स्वस्य शत्रोः (उत) अथवा (अन्यस्या अरात्याः) अन्यस्य शत्रोः (सः) परमात्मा (वृकः) हिंसको भवति (हि) यतः (धन्वन् न तृष्णा)

यथा निरुदकदेशतृष्णा (समरीत) व्याप्नोति (तां) तृष्णां (सोम) हे परमात्मन्! त्वं (अभिजहि) नाशय (दुराध्यः) हे इन्द्रियागोचर! (पवमान) शुद्धस्त्वं पुंसः कामरूपां तृष्णां जहि ॥

**पदार्थ**—(उत) अथवा (स्वस्या अरात्याः) अपना शत्रु हो (उत) अथवा (अन्यस्या अरात्याः) दूसरेका शत्रु हो दोनों प्रकारके शत्रु हिंसनीय होते हैं (हि) क्योंकि (सः) वह (वृकः) हिंसक रूप है (धन्वन् न तृष्णा) जिस प्रकार बाधा देने वाली तृष्णा (समरीत) आकर प्राप्त होती है (तानाभि) उस तृष्णाको (सोम) हे परमात्मन् तुम (जहि) नाश करो (पवमान) हे सबके पवित्र करने वाले (दुराध्यः) हे इन्द्रियागोचरपरमात्मन् आप इस कामना-रूप तृष्णाका नाश करें ॥

**भावार्थ**—हे परमात्मन्! आप, जो दुराराध्य शत्रु हैं, अर्थात् दुःखसे वशीभूत होने वाले हैं उनका हनन करें यहां शत्रुसे तात्पर्य कामरूप शत्रुका भी है। इसी अभिप्रायमें गीतामें कृष्णजीने कहा है, कि "पापमानं जहिह्येनं ज्ञानविज्ञाननाशनम्" कि ज्ञान और विज्ञानको नाश करने वाले इस पापी कामको नाश करो ॥३॥

दिवि ते नाभा परमो य आददे
पृथिव्यास्ते रुरुहुः सानवि क्षिपः ।
अद्रयस्त्वा वप्सति गोरधि
त्वच्य१प्सु त्वा हस्तैर्दुदुहुर्मनीषिणः ॥४॥

दिवि । ते । नाभा । परमः । यः । आऽददे । पृथिव्याः । ते । रुरुहुः । सानवि । क्षिपः । अद्रयः । त्वा । वप्सति । गोः । अधि । त्वचि । अप्ऽसु । त्वा । हस्तैः । दुदुहुः । मनीषिणः ॥४॥

पदार्थः—( मनीषिणः ) मेधाविनोजनाः ( त्वा ) त्वां ( हस्तैः ) ज्ञानयोगकर्मयोगादिसाधनैः ( दुदुहुः ) साक्षात्कुर्वते अथ च तेषां ( अद्रयः ) चित्तवृत्तयः ( गोरधित्वचि ) स्वमनसि ( अप्सु ) कर्मभ्यः ( त्वा ) भवन्तं ( वप्सति ) गृह्णन्ति । हे परमात्मन् ! ( ते ) तव । ( दिविनाभा ) लोक-लोकान्तरस्य बन्धन रूपद्युलोके ( यः ) यः पुरुषः ( आददे ) त्वां गृह्णाति स ( परमः ) सर्वोत्कृष्टो भवति । अथ च ( ते ) तव ( पृथिव्याः ) पृथ्वीलोकस्य ( सानवि ) उपरि भागे ( क्षिपः ) धृतः सन् ( रुरुहुः ) उत्पद्यते ।

पदार्थ—( मनीषिणः ) मेधावी लोग ( त्वा, तुमको ( हस्तैः ) ज्ञानयोग कर्म्मयोगादि साधनों द्वारा ( दुदुहुः ) साक्षात्कार करते हैं । और उनकी ( अद्रयः ) चित्तवृत्तियें ( गोरधित्वचि ) अपने मनमें ( अप्सु ) कर्म्मोंके लिये ( त्वा ) तुमको ( वप्सति ) ग्रहण करतीं हैं । हे सोम ! ( ते ) तुम्हारे ( दिविनाभा ) लोक-लोकान्तरोंके बन्धनरूप द्युलोकमें ( यः ) जो पुरुष ( आददे ) तुमको ग्रहण करता है, वह ( परमः ) सर्वोत्कृष्ट होताहै । और ( ते ) तुम्हारे ( पृथिव्याः ) पृथिवीलोकके ( सानवि ) उच्चशिखरमें ( क्षिपः ) रक्खा हुआ ( रुरुहुः ) उत्पन्न होता है ॥

भावार्थ—जो लोग चित्तवृत्तिनिरोधद्वारा परमात्माका साक्षात्कार करते हैं, वे परमात्माकी विभूतिमें सर्वोपरि होकर विराजमान होते हैं ॥४॥

एवा त इन्दो सुभ्वं सुपेशसं
रसं तुञ्जन्ति प्रथमा अभिश्रियः ।
निदंनिदं पवमान नि तारिष
आविस्ते शुष्मो भवतु प्रियो मदः ॥५॥४॥

एव । ते । इंदो । इति । सुऽभ्वं । सुऽपेशसं । रसं । तुंजंति । प्रथमाः । अभिऽश्रियः । निदंऽनिदं । पवमान । नि । तारिषः । आविः । ते । शुष्मः । भवतु । प्रियः । मदः ॥५॥४॥

पदार्थः—(इन्दो) हे परमैश्वर्य्ययुक्तपरमात्मन् ! (ते) तव (सुपेशसं) रूपं (सुभ्वं) सुन्दरमस्ति (अभिश्रियः) त्वदुपासकाः (प्रथमाः) मुख्यं (रसं) आनन्दं (तुंजन्ति) गृह्णन्ति (पवमान) हे सर्वपवित्रकारकपरमात्मन् ! (निदं निदं) प्रतिनिन्दकं भवान् (नितारिषः) विनाशयतु । पुनः (ते) तव (शुष्मः) बलं (प्रियः) यःसर्वप्रियकर्ता (मदः) आनन्ददातास्तिसः (आविः) प्रादुर्भवति ॥

पदार्थ—(इंदो) हे परमैश्वर्य्ययुक्त परमात्मन् ! (ते) तुम्हारा (सुपेशसं) रूप (सुभ्वं) सुन्दर है। (अभिश्रियः) तुम्हारे उपासक लोग (प्रथमा) मुख्य (रसं) आनन्दको (तुञ्जन्ति) ग्रहण करते हैं। (पवमान) हे सबको पवित्र करने वाले परमात्मन् ! (निदंनिदं) प्रत्येक निन्दकको आप (नितारिषः) नाश करते हैं। और (ते) तुम्हारा (शुष्मः) बल (प्रियः) जो सबके प्रिय करने वाला है (मदः) और आनन्द देने वाला है, वह (आविः) प्रकट हो।

भावार्थ—परमात्माका आनन्द परमात्मयोगियोंके लिये सदैव आह्लादक है। और दुराचारि-दुष्टोंके लिये परमात्माका बल नाशका हेतु है। इस लिये परमात्म-परायण-पुरुषोंको चाहिये कि वे सदैव परमात्माके नियमोंके पालनमें तत्पर रहें ॥५॥

इत्येकोनाशीतितमं सूक्तं चतुर्थोवर्गश्च समाप्तः।

यह ७९ वां सूक्त और ४ था वर्ग समाप्त हुआ।

अथ पञ्चर्चस्याशीतितमस्य सूक्तस्य—

१–५ वसुर्भारद्वाज ऋषिः ॥ पवमानः सोमो देवता ॥
छन्दः–१, ४ जगती । २, ५ विराड्जगती ।
३ निचृज्जगती ॥ निषादः स्वरः ॥

अथ परमात्मन ऐश्वर्यं प्रकारान्तरेण निरूप्यते ।

अब परमात्माके ऐश्वर्यको प्रकारान्तरसे निरूपण करते हैं ।

सोम॑स्य॒ धारा॑ पवते नृ॒चक्ष॑स
ऋ॒तेन॑ दे॒वान्ह॑वते दि॒वस्परि॑ ।
बृह॒स्पते॑ र॒वथे॑ना॒ वि दि॑द्युते समु॒द्रासो॑
न सव॑नानि विव्यचुः ॥१॥

सोम॑स्य । धारा॑ । प॒व॒ते॒ । नृ॒ऽचक्ष॑सः । ऋ॒तेन॑ । दे॒वान् । ह॒व॒ते॒ । दि॒वः । परि॑ । बृह॒स्पतेः॑ । र॒वथे॑न । वि । दि॒द्यु॒ते॒ । स॒मु॒द्रासः॑ । न । सव॑नानि । वि॒व्य॒चुः ॥१॥

पदार्थः—(नृचक्षसः) परमात्मन उपासकान् (सोमस्य) सर्वोत्पादकस्य परमेश्वरस्य (धारा) आमोदमयी वृष्टिः (पवते) पुनाति । अथ च (देवान्) विद्वज्जनान् (ऋतेन) सत्येन (दिवस्परि) परितः (पवते) परमात्मा पवित्रयति (बृहस्पतेः) वाक्पतिं विद्वांसं जगदीश्वरः (रवथेन) शब्दद्वारा पुनाति (न) यथा (समुद्रासः) अन्तरिक्षलोकाः (सवनानि) यज्ञानां

(विव्यचुः) विस्तारं कुर्वन्ति । तथा शाब्दिका विद्वांसः परमात्मन ऐश्वर्यं तन्वते ॥

पदार्थ—(नृचक्षसः) परमात्माके उपासक लोगोंके लिये (सोमस्य) सर्वोत्पादक परमात्माकी (धारा) आनन्दमयवृष्टि (पवते) पवित्र करती है। और (देवान्) विद्वान् लोगोंको (ऋतेन) शास्त्रीय सत्यद्वारा (द्विवस्परि) सब ओरसे (पवते) परमात्मा पवित्र करता है। (बृहस्पतेः) वाणियोंके पति विद्वान्को परमात्मा (रवथेन) शब्दसे पवित्र करता है। (न) जिस प्रकार (समुद्रासः) अन्तरिक्ष लोक (सवनानि) यज्ञोंका (विव्यचुः) विस्तार करते हैं, इसी प्रकार शब्द विद्याके वेत्ता विद्वान् परमात्माके ऐश्वर्यका विस्तार करते हैं ॥

भावार्थ—मनुष्यको चाहिये कि प्रथम शब्द ब्रह्मका ज्ञाताबने, फिरमुख्य ब्रह्मका ज्ञाता बनाकर लोगोंको सदुपदेश दें ॥१॥

यं त्वा वाजिन्नघ्न्या अभ्यनूषतायोहतं
योनिमा रोहसि द्युमान् ।
मघोनामायुः प्रतिरन्महि श्रव
इन्द्राय सोम पवसे वृषा मदः ॥२॥

यं । त्वा । वाजिन् । अघ्न्याः । अभि । अनूषत । अयःऽहतं । योनिं । आ । रोहसि । द्युऽमान् । मघोनां । आयुः । प्रऽतिरन् । महि । श्रवः । इंद्राय । सोम । पवसे । वृषा । मदः ॥२॥

पदार्थः—(सोम) हे जगद्रक्षकपरमात्मन्! भवान् (मघोनां) उपासकानां (आयुः) जीवनं (प्रतिरन्) वर्द्धयति

अथ च (इंद्राय) कर्मयोगिने (महिश्रवः) बलप्रदाताचास्ति। तथा (मदः) सकलजनाह्लादकोस्ति। अथ च (वृषा) कामनावर्षकस्त्वम् (पवसे) पुनासि। हे चराचरजगदुत्पादकपरमेश्वर! (वाजिन्) हेबलस्वरूप परमात्मन्! (त्वां) यं भवन्तं (अघ्न्याः) प्रकृत्याद्यविनाशिन्यः शक्तयः (अभ्यनूषत) विभूषयन्ति। तथा (अयोहतं) त्वं हिरण्मयं (योनिं) स्थानं (आरोहसि) व्याप्नोषि। अथ (द्युमान्) सर्वप्रकाशकोसि।

**पदार्थ**—(सोम) हे परमात्मन्! आप (मघोनां) उपासकोंकी (आयुः) आयुके (प्रतिरन्) बढ़ाने वाले हैं। और (इन्द्राय) कर्म्मयोगीके लिये (महिश्रवः) बड़े बलके देने वाले हैं। (मदः) सबके आह्लादक हैं और (वृषा) सब कामनाओंकी वृष्टि करने वाले हैं। और (पवसे) पवित्र करते हैं। हे परमात्मन्! (वाजिन्) हे बलस्वरूप। (यंत्वा) जिस आपको (अघ्न्याः) प्रकृत्यादि अविनाशी शक्तियें (अभ्यनूषत) विभूषित करतीं हैं। (अयोहतं) आप हिरण्यमय (योनिं) स्थानको (आरोहसि) व्याप्त किये हुए हैं। और (द्युमान्) प्रकाशस्वरूप हैं।

**भावार्थ**—परमात्मा इस हिरण्यमय प्रकृति-रूपी-ज्योति का अधिकरण है। या यों कहो, कि इस हिरण्यमयप्रकृतिने उसके स्वरूपको आच्छादन किया है। इसी अभिप्रायसे उपनिषद्में कहा है, कि 'हिरण्यमयेन पात्रेण सत्यास्यापिहितं मुखम्' कि हिरण्यमय-पात्रसे परमात्माका स्वरूप ढका हुआ है ॥२॥

ऐन्द्रस्य कुक्षा पवते मदिन्तम
ऊर्जं वसानः श्रवसे सुमङ्गलः।
प्रत्यङ् स विश्वा भुवनाभि
पप्रथे क्रीळन्हरिरत्यः स्यन्दते वृषा ॥३॥

आ । इंद्रस्य । कुक्षा । पवते । मदिन्ऽतमः । ऊर्जं । वसानः । श्रवसे । सुऽमंगलः । प्रत्यङ् । सः । विश्वा । भुवना । अभि । पप्रथे । क्रीलन् । हरिः । अत्यः । स्यंदते । वृषा ॥३॥

पदार्थः—( श्रवसे ) सर्वोत्कृष्टबलाय ( सुमङ्गलः ) मङ्गल-रूपोस्ति । ( ऊर्ज्जं वसानः ) तथा सर्वेषां जीवनाधारो भूत्वा विराजमानोस्ति । तथा ( मदिन्तमः ) सकलामोददायकोस्ति । ( इन्द्रस्य ) कर्मयोगिनः ( कुक्षा ) अन्तःकरणं ( पवते ) पुनाति ( सः ) असौ परमात्मा ( प्रत्यङ् ) सर्वव्यापकोस्ति । अथच ( विश्वा भुवना ) सकल लोकलोकान्तराणि ( अभिपप्रथे ) निर्मिमीते । ( हरिः ) सोऽनन्तबल युक्तः परमात्मा ( क्रीलन् ) क्रीडां कुर्वन् तथा ( अत्यः ) सर्वत्र व्याप्नुवन् अथ च ( वृषा ) आनन्दं ददन् ( स्यन्दते ) स्वकीय-व्यापकताशक्त्या सर्वत्र परिपूर्णोस्ति ॥

पदार्थ—( श्रवसे ) सर्वोपरि बलके लिये ( सुमंगलः ) मंगल-रूप है । ( ऊर्जं वसानः ) सबका प्राणाधार होकर विराजमान हो रहा है । ( मदिन्तमः ) सबका आनन्द कारक है ( इंद्रस्य ) कर्मयोगीके ( कुक्षा ) अन्तःकरणमें ( पवते ) पवित्रता प्रदान करता है ( सः ) वह ( प्रत्यङ् ) सर्वव्यापक है । और ( विश्वा भुवना ) सम्पूर्ण लोक-लोकान्तरोंको ( अभिपप्रथे ) रचता है । ( हरिः ) वह अनन्तबलयुक्त ( क्रीलन् ) क्रीड़ा करता हुआ और ( अत्यः ) सर्वव्यापक होकर और ( वृषा ) आनन्दका वर्षक होकर ( स्यन्दते ) अपनी व्यापक शक्ति द्वारा सर्वत्र परिपूर्ण हो रहा है ॥

तं त्वा देवेभ्यो मधुमत्तमं
नरः सहस्रधारं दुहते दश क्षिपः।
नृभिः सोम प्रच्युतो ग्रावभिः
सुतोविश्वान्देवाँ आ पवस्वा सहस्रजित् ॥४॥

तं। त्वा। देवेभ्यः। मधुमत्ऽतमं। नरः। सहस्रऽधारं। दुहते। दश। क्षिपः। नृऽभिः। सोम। प्रऽच्युतः। ग्रावऽभिः। सुतः। विश्वान्। देवान्। आ। पवस्व। सहस्रऽजित् ॥४॥

पदार्थः—( देवेभ्यः ) विद्वद्भ्यः ( मधुमत्तमं ) अत्यन्तानन्ददं तथा ( सहस्रधारं ) विविधानन्दवर्षकं ( ते त्वां ) पूर्वोक्तं भवन्तं ( नरः ) ऋत्विगादयः ( दुहते ) दुहन्ति। अथ च ( दशक्षिपः ) कर्मेन्द्रियज्ञानेन्द्रियाणां दशानां ( ग्रावभिः ) शक्तिभिः ( सुतः ) सिद्धः ( सोम ) हे परमात्मन्! भवान् ( नृभिः ) मनुष्यैः साक्षात्क्रियते। ( सहस्रजित् ) हे अनेकानेकासुरीशक्तिनाशकपरमात्मन्! त्वम् ( विश्वान् देवान् ) अखिलान्विदुषः ( आपवस्व ) पुनीहि॥

पदार्थ—( देवेभ्यः ) विद्वानोंके लिये ( मधुमत्तमं ) अत्यन्त आनन्दकेप्रदाता ( तं त्वा ) पूर्वोक्त तुमको ( नरः ) ऋत्विगादि लोग ( दुहते ) दुहते हैं। और ( दश क्षिपः ) पांच कर्मेन्द्रिय और पांच ज्ञानेन्द्रियोंकी ( ग्रावभिः ) शक्तियोंसे ( सुतः ) सिद्ध किये हुए ( सोम ) हे परमात्मन्! आप ( नृभिः ) मनुष्योंसे साक्षात्कार किये जाते हैं। ( सह-

स्रजित् ) अनन्त प्रकारकी आसुरीय शक्तियोंको तिरस्कृत करने वाले आप ( विश्वान् देवान् ) सम्पूर्ण विद्वानोंको ( आपवस्व ) पवित्र करें ।

भावार्थ—जो लोग परमात्माका साक्षात्कार करते हैं, परमात्मा उन्हें अवश्य पवित्र करते हैं ॥४॥

तं त्वा हस्तिनो मधुमन्तमद्रि-
भिर्दुहन्त्यप्सु वृषभं दश क्षिपः ।
इन्द्रं सोम मादयन्दैव्यं जनं
सिन्धोरिवोर्मिः पवमानो अर्षसि ॥५॥५॥

तं । त्वा । हस्तिनः । मधुऽमंतं । अद्रिऽभिः । दुहंति । अप्ऽसु । वृषभं । दश । क्षिपः । इंद्रं । सोम । मादयन् । दैव्यं । जनं । सिंधोःऽइव । ऊर्मिः । पवमानः । अर्षसि ॥

पदार्थः—( तं त्वा ) प्रागुक्तगुणसम्पन्नं त्वां ( वृषभं ) कामनावर्षकं परमात्मानं ( दशक्षिपः ) दशसंख्याकाः प्राणाः ( अद्रिभिः ) स्वशक्तिभिः ( हस्तिनः ) स्वच्छतापूर्वकं ( अप्सु ) कर्मविषये ( दुहन्ति ) दुहते ! ( सोम ) हे परमात्मन् ( इन्द्रं दैव्यं जनं ) दिव्यगुणसम्पन्नं कर्मयोगिनं ( मादयन् आनन्दयन् ) ( सिन्धोरिवोर्मिः ) समुद्रवीचिरिव ( पवमानः ) पवित्रयन्त्वमर्षसि प्राप्तो भवसि ॥

पदार्थ—( तं त्वा ) पूर्वोक्त गुणसम्पन्न आपको जो ( वृषभं ) जो सब कामनाओं की वृष्टि करता है ( अद्रिभिः ) अपनी शक्तियोंसे

( दशक्षिपः ) दशप्राण ( हस्तिनः ) स्वच्छता युक्त ( अप्सु ) कर्म्मविषयक ( दुहंति ) दुहते हैं परमात्मन् ! ( इन्द्र दैव्यं जनं ) दिव्यगुणसम्पन्न कर्म्म योगीको ( मादयन् ) आनन्द देते हुए ( सिंधोरिवोर्मिः ) समुद्रकी लहरोंके समान ( पवमानः ) पवित्र करते हुए ( अर्षसि ) प्राप्त होते हैं।

भावार्थ--जो पुरुष कर्म्मयोग वा ज्ञानयोगद्वारा अपने आपको परमात्माकी कृपाका पात्र बनाते हैं, परमात्मा उन्हें सिन्धुकी लहरोंके समान अपने आनन्द-रूपी-वारिसे सिञ्चित करता है ॥५॥

इत्यशीतितमं सूक्तं पञ्चमो वर्गश्च समाप्तः ।

यह अस्सीवाँ सूक्त और पाचवाँ वर्ग समाप्त हुआ।

अथ पञ्चर्चस्या एकाशीतितमस्य सूक्तस्य—

१–५ वसुर्भारद्वाज ऋषिः ॥ पवमानः सोमो देवता ॥
छन्दः–१,३ निचृज्जगती । ४ जगती । ५
निचृत्त्रिष्टुप् ॥ स्वरः १–४
निषादः । ५ धैवतः ॥

अथेश्वरज्ञानाधिकारिणो निरूप्यन्ते ।

अब ईश्वरके ज्ञानके अधिकारियोंका निरूपण करते हैं ।

प्र सोम॑स्य पव॑मानस्यो॒र्मय॒
इन्द्र॑स्य यन्ति ज॒ठरं॑ सु॒पेश॑सः ।
द॒ध्ना यदी॒मुन्नी॑ता य॒शसा॒ गवां॑
दा॒नाय॒ शूर॑मु॒दम॑न्दिषुः सु॒ताः ॥१॥

प्र । सोम॑स्य । पव॑मानस्य । ऊ॒र्मय॑ः । य॒न्ति । ज॒ठर॑ं । सु॒ऽपे॒शसः । द॒घ्ना । यत् । ई॒म् । उत्ऽनी॑ताः य॒शसा॑ । गवा॑म् । दा॒नाय॑ । शूर॑म् । उ॒त्ऽअम॑न्दिषुः । सु॒ताः ॥१॥

पदार्थः—( पवमानस्य ) सर्वपावकस्य ( सोमस्य ) परमेश्वरज्ञानस्य ( ऊर्मयः वीचयः ( इन्द्रस्य ) ज्ञानयोगिनः (जठरं) अन्तःकरणं ( प्रयन्ति ) प्राप्नुवन्ति । या वीचयः ( सुपेशसः ) सुन्दराः सन्ति । ( गवां ) इन्द्रियाणां ( दानाय ) सुज्ञानदानाय ( दघ्ना यदीमुन्नीताः ) सहायकसंस्कारद्वारा ( यशसा ) बलेन ( उदमंदिषुः ) मादे ( सुताः ) संस्कृताः ( शूरं ) वीरं कर्मयोगिनं प्रदीप्तं कुर्वन्ति ॥

पदार्थ—( पवमानस्य ) सबको पवित्र करने वाले ( सोमस्य ) परमात्माके ज्ञानकी ( ऊर्मयः ) लहरें ( इन्द्रस्य ( ज्ञानयोगीके ) ( जठरं ) अन्तःकरणको (प्रयन्ति) प्राप्त होती हैं । जो लहरें (सुपेशसः) सुन्दर हैं और (गवां) इन्द्रियोंके ( दानाय) सुन्दर ज्ञान देनेके लिये ( दघ्ना यदीमुन्नीताः) सहायक-संस्कार द्वारा ( यशसा ) बलसे (उदमंदिषुः) आनन्द में ( सुताः ) संस्कार किये हुए ( शूरं ) शूरवीर कर्मयोगीको प्रदीप्त करतीं हैं ।

भावार्थ—परमात्माके सदुपदेश ज्ञानयोगीको पवित्र करते हैं । और उसके उत्साहको प्रतिदिन बढ़ाते हैं ॥१॥

अच्छा॒ हि सोम॑ः क॒लशाँ॒

असि॑ष्यदद॒त्यो॒ न वोळ्हा॑ र॒घुव॑र्तनि॒र्वृषा॑ ।

अथा देवानामुभयस्य जन्मनो
विद्वाँ अश्नोत्यमुत इतश्च यत् ॥२॥

अच्छ । हि । सोमः । कलशान् । आसिस्यदत । अत्यः । न । वोळ्हा । रघुऽवर्तनिः । बृषा । अथ । देवानां । उभयस्य । जन्मनः । विद्वान् । अश्नोति । अमुतः इतः । च यत् ॥२॥

पदार्थः—(देवानां) कर्मयोगि-विज्ञानयोगिनोः (उभयस्य) द्वयोः (जन्मनः) ज्ञानकर्मणोः (विद्वान्) ज्ञाता (सोमः) सौम्यस्वभावः परमात्मा (कलशान्) तदन्तःकरणानि (अत्यः) शीघ्रगा (वोल्हा न) विद्युदिव (अच्छा सिस्यन्दत) सम्यक् सिञ्चनं करोति । स परमेश्वरः (रघुवर्तनिः) सूक्ष्मादपि सूक्ष्मतरोऽस्ति । अथ च (वृषा) सर्वाभीष्टदायकोऽस्ति योजन्मनि (अमुतः) इहजन्मनि तन्महत्वं विजानाति स पुरुषः (अश्नोति) ब्रह्मानन्दं भुनाक्ति । (अथ च यत्) योह्यानन्दः (इतः) अमुष्मात् ज्ञानयोगात् लभ्यते स खलु नान्यसाधनेन प्राप्यते जनैः ॥

पदार्थ—(देवानां) कर्म्मयोगी और विज्ञानयोगी आदि जो विद्वान् हैं, उनके (उभयस्य) दोनों (जन्मनः) ज्ञान और कर्म्मको (विद्वान्) जानता हुआ (सोमः) सौम्यस्वभाव परमात्मा (कलशान्) उनके अन्तःकरणोंको (अत्यः) अतिशीघ्रगामी (वोल्हा) विद्युतके (न) समान (अच्छा सिस्यन्दत्) भलिभांति सिञ्चन करता है । वह परमात्मा (रघुवर्तनिः) शूक्ष्मसे शूक्ष्म है । और (वृषा) सब कामनाओंका प्रदाता है जो पुरुष (अमुतः) इसी जन्ममें (उसके महत्वको जान लेता है, वह अश्नोति) ब्रह्मानन्दको भोगता है । (च) और (यत्) जो आनन्द (इतः) इसी ज्ञानयोगसे मिलता है अन्य किसी साधनसे नहीं ।

भावार्थ—मनुष्यकी उन्नतिके लिये इस लोकमें ज्ञान और कर्म्म दो ही साधन हैं। इस लिये मनुष्यको चाहिये कि, वह इन दोनों मार्गोंका अवलम्बन करे ॥२॥

आ नः सोम पवमानः किरा
वस्विन्दो भव मघवा राधसो महः ।
शिक्षा वयोधो वसवे सु चेतुना
मा नो गयमारे अस्मत्परा सिचः ॥३॥

आ । नः । सोम । पवमानः । किर । वसु । इंदो इति । भव । मघऽवा । राधसः । महः । शिक्ष । वयःऽधः । वसवे सु । चेतुना । मा । नः । गयं । आरे । अस्मान् । परा । सिच ।

पदार्थः—( सोम ) हे परमात्मन् ! भवान् ( पवमानः ) पवितास्ति । ( इंन्दो ) हे सर्वप्रकाशक ! त्वम् ( नः ) अस्मान् ( वसु ) सर्वविधं धनं ( आकिर ) देहि । ( मघवा ) सर्वधन स्वाम्यसि । अतोमह्यं ( महोराधसः ) उत्कृष्टधनस्य ( भव ) प्रदाता भव । हे परमेश्वर ! त्वं मह्यं ( सुचेतुना ) स्वीयपवित्र ज्ञानेन ( शिक्ष ) शिक्षय । अथ च ( वयोधः ) त्वं सर्वैश्वर्य धारकोसि ( वसवे ) ऐश्वर्ययोग्याय ममैश्वर्यंदेहि । अथ च ( गयं ) धनं ( अस्मादारे ) मत्सकाशात् ( मापरासिचः ) मान्यत्रकुरु ।

पदार्थ--( सोम ) हे परमात्मन् ! ( पवमानः ) आप सबको पवित्र करने वाले हैं । ( इन्दो ) हे सर्वप्रकाशक ! आप ( नः ) हमको ( वसु ) सब प्रकारके धनको ( आकिर ) दें । ( मघवा ) आप सब ऐश्वर्य्य

के स्वामी हैं। इस लिये हमारे (महो राधसः) अत्यन्त धनको (भव) प्रदाता बनें रहें परमात्मन्! आप हमको अपने (सुचेतुना) पवित्रज्ञानसे (शिक्ष) शिक्षा दें। और (वयोध) आप सब प्रकारके ऐश्वर्योंको धारण करनेवाले हैं। (वसवे) ऐश्वर्यके पात्र मेरे लिये आप ऐश्वर्य प्रदान करें। और (गयं) धनको (अस्मदारे) हमसे (मापरासिचः) मत दूर करें।

भावार्थ—ईश्वरोपासकोंको चाहिये, कि ईश्वरकी प्राप्तिके हेतु ईश्वरके परम ऐश्वर्यका कदापि त्याग न करें। और ईश्वरसे भी सदा यही प्रार्थना करें कि हे परमेश्वर! आप हमको ऐश्वर्यसे कदापि वियुक्त न करें ॥३॥

आ नः पूषा पवमानः सुरातयो
मित्रो गच्छन्तु वरुणः सजोषसः।
बृहस्पतिर्मरुतो वायुरश्विना त्वष्टा
सविता सुयमा सरस्वती ॥४॥

आ। नः। पूषा। पवमानः। सुऽरातयः। मित्रः। गच्छंतु। वरुणः। सऽजोषसः। बृहस्पतिः। मरुतः। वायुः। अश्विना। त्वष्टा। सविता। सुऽयमा। सरस्वती ॥

पदार्थः—हे परमात्मन्! (नः) अस्मान् (पूषा) धर्मोपदेशेन पुष्टिकारकोविद्वान् (पवमानः) पथ्यापथ्यमुक्त्वा पवित्रकारकोमनीषी (सुरातयः) दानशीलः (मित्रः) सर्वप्रियः (वरुणः) सर्ववशकारकः (बृहस्पतिः) वाक्पतिः (मरुतः) ज्ञानयोगी (वायुः) कर्मयोगी (अश्विना) कर्मयोगिज्ञानयोगिना-वुभावपि (त्वष्टा) कार्यकरणे समर्थौ (सविता) उत्तमोत्तम-

पदार्थ निर्मातारौ। (सुयमा) सर्वनियामकौ (सरस्वती) ज्ञान-भूषकौ विद्वांसौ (आगच्छन्तु) प्राप्नुतः छान्दसत्वात् "व्यत्ययेन द्विवचन स्थाने बहुवचनम्" ॥

**पदार्थ**—हे परमात्मन्! (नः) हमको (पूषा) धर्म्मोपदेश द्वारा पुष्टि करने वाला विद्वान् (पवमानः) पथ्यापथ्य बताकर पवित्र करने वाला विद्वान् (सुरातयः) दानशीलविद्वान् (मित्रः) सबसे मैत्री करने वाला विद्वान् (वरुणः) सबको वशीभूत करने वाला विद्वान् (बृहस्पतिः) वाणियोंके पति (मरुतः) ज्ञानयोगी (वायुः) कर्म्मयोगी (अश्विना) कर्म्म और ज्ञानयोगी दोनों (त्वष्टा) कार्य्य करनेमें समर्थ विद्वान् (सविता) उत्तमोत्तमपदार्थोंका निर्माता विद्वान् (सुयमा) सबको नियममें रखनेवाला विद्वान् (सरस्वती) ज्ञानको सर्वोपरि भूषणरूपसे धारण करने वाला विद्वान् ये सब पूर्वोक्त विद्वान् (नः) हमको (आगच्छन्तु) प्राप्त हों।

**भावार्थ**—परमात्मा उपदेश करता है, कि हे मनुष्यो! तुम सामाजिकउन्नतिके लिये पूर्वोक्त विद्वानोंका संग्रह करो। ताकि तुम सब विद्याओंमें निपुण होकर संसारमें अभ्युदयशाली बनो ॥४॥

उभे द्यावा पृथिवी विश्वमिन्वे
अर्यमा देवो अदितिर्विधाता।
भगो नृशंस उर्व१न्तरिक्षं विश्वे
देवाः पवमानञ्जुषन्त ॥५॥३॥

उभे इति। द्यावापृथिवी इति। विश्वमिन्वे इति। विश्वंऽइन्वे। अर्यमा। देवः। अदितिः। विऽधाता। भगः। नृऽशंसः। उरु। अंतरिक्षं। विश्वे। देवाः। पवमानं। जुषंत ॥५॥

**पदार्थः**—( पवमानं ) सर्वपावकं परमात्मानं ( उभे द्यावा पृथिवी ) द्वावपि द्युलोक-पृथ्वीलोकौ ( विश्वमिन्वे ) यौ विस्तार रूपेण व्याप्तौ वर्तेते । ( अर्यमादेवः ) तथा न्यायकारिणो राजानः (अदितिः) तथा अज्ञानखण्डनकर्त्तारो विद्वाँसः (विधाता) अखिल-नियमनिर्मातारः ( भगः ) ऐश्वर्यवन्तः ( नृशंसः ) पदार्थगुण-वर्णकाः ( उर्वन्तरिक्षं ) अन्तरिक्षविद्यावेत्तारः ( विश्वे देवाः ) इमे सर्वे देवाः ( जुषन्त ) सेवन्ते ॥

**पदार्थ**—( पवमाने ) सबको पवित्र करने वाले परमात्माको ( उभे द्यावा पृथिवी ) पृथिवीलोक और द्युलोक ( विश्वमिन्वे ) जो विस्तृत रूपसे व्याप्त है ( अर्यमादेवः ) और न्याय करने वाला राजा ( अदितिः ) अज्ञानका खण्डन करने वाला विद्वान् ( विधाता ) सब नियमोंका विधान करने वाला ( भगः ) ऐश्वर्यसम्पन्न ( नृशंसः ) पदार्थोंके गुणोंका वर्णन करने वाला ( उर्वन्तरिक्षं ) अन्तरिक्षकी विशाल विद्याको जानने वाला ( विश्वे देवाः ) ये सब देव ( जुषन्त ) सेवन करते हैं ।

**भावार्थ**—परमात्माकी विभूति द्युलोक पृथिवीलोक अन्तरिक्ष लोक ये सब लोक-लोकान्तर है । और इन सब लोकलाकान्तरोंके ज्ञाता विद्वान् भी परमात्मा की विभूति हैं ॥५॥

इत्येकाशीतितमं सूक्तं षष्ठो वर्गश्च समाप्तः ।

यह ८१वां सूक्त औ ६वां वर्ग समाप्त हुआ ।

अथ पञ्चर्चस्य द्व्यशीतितमस्य—

१—५ वसुर्भारद्वाज ऋषिः ॥ पवमानः सोमो देवता ॥
छन्दः—१, ४ विराड्जगती । २ निचृज्जगती ।
३ जगती । ५ त्रिष्टुप् ॥ स्वरः—१—४
निषादः ५ धैवतः ॥

असावि सोमो अरुषो वृषा हरी
राजेव दस्मो अभि गा अचिक्रदत् ।
पुनानो वारं पर्येत्यव्ययं श्येनो
न योनिं घृतवन्तमासदम् ॥ १ ॥

असावि । सोमः । अरुषः । वृषा । हरिः । राजाऽइव । दस्मः । अभि । गाः । अचिक्रदत् । पुनानः । वारं । परि । एति । अव्ययं । श्येनः । न । योनिं । घृतऽवंत । आऽसदं ।

पदार्थः—(सोमः) यः सर्वोत्पादकः परमात्मा (अरुषः) प्रकाशस्वरूपः (वृषा) सद्गुणानां वृष्टिकर्ता (हरिः) पापनाशकश्चास्ति । स (राजेव) राजतुल्यः (दस्मः) दर्शनीयोऽस्ति । स च (गाः) लोकलोकान्तराणाञ्चतुर्दिक्षु (अभि अचिक्रदत्) शब्दायमानो भवति । स (वारं) वरणीयपुरुषं यो दृढभक्तोऽस्ति तं (पुनानः) पवित्रयन् (पर्य्येति) प्राप्नोति (न) येन प्रकारेण (श्येनः) विद्युत् (घृतवन्तं) स्नेहवन्तं (आसदं) स्थानानां (योनिं) समाश्रित्य प्राप्नोति । एवमुक्तगुणयुक्तः परमात्मा [ असावि ] निर्म्ममे ॥

**पदार्थ**—( सोमः ) जो सर्वोत्पादक ( अरुषः ) प्रकाश स्वरूप ( वृषा ) सद्गुणोंकी वृष्टि करने वाला ( हरिः ) पापोंके हरण करने वाला है, वह ( राजेव ) राजाके समान ( दस्मः ) दर्शनीय है। और वह ( गः ) पृथिव्यादि लोकलोकान्तरोंके चारो ओर ( अभि अचिक्रदत् ) शब्दायमान हो रहा है। वह ( वारं ) वर्णीयपुरुषको जो ( अव्ययं ) दृढ़भक्त है उसको ( पुनानः ) पवित्र करता हुआ ( पर्य्येति ) प्राप्त होता है। ( न ) जिसप्रकार ( श्येनः ) विद्युत् ( घृतवन्तं ) स्नेहवाले ( आसदं ) स्थानोंको ( योनिं ) आधार बनाकर प्राप्त होता है। इसी प्रकार उक्तगुणवाला परमात्माने ( असावि ) इस ब्रह्माण्डको उत्पन्न किया।

**भावार्थ**—"सुते चराचरं जगदिति सोमः" जो इस चराचर ब्रह्माण्डको उत्पन्न करता है उसका नाम सोम है। यह शब्द षूङ् प्राणि गर्भविमोचनेसे सिद्ध होता है। और उसी धातुसे असावियत् प्रयोग है। जिसके अर्थ किसी वस्तुको उत्पन्न करनेके हैं। और सायणाचार्य्यने जो इसके अर्थ सोमके कूटेजानेके किये हैं वह कदापि ठीक नहीं हो सकते क्योंकि सोम तो यहाँ कर्त्ता है कर्म्म नहीं। और यदि कोई यह कहे कि यहाँ कर्म्ममें प्रत्यय है तो सोममें तृतीया क्यों नहीं तो इसका उत्तर यह है कि यह वैदिक प्रयोग है ॥१॥

कविर्वे॒धस्या॒ पर्ये॑षि॒ माहि॑न॒मत्यो॒
न मृ॒ष्टो अ॒भि वाज॑मर्षसि ।
अ॒प॒सेध॑न्दुरि॒ता सो॑म मृळय
घृ॒तं वसा॑नः॒ परि॑ यासि नि॒र्णिज॑म् ॥२॥

कविः । वे॒धस्या॑ । परि॑ । ए॒षि॒ । माहि॑नं । अत्यः॑ । न । मृ॒ष्टः । अ॒भि । वाजं॑ । अ॒र्ष॒सि॒ । अ॒प॒ऽसेध॑न् । दुः॒ऽइ॒ता । सोम॑ । मृ॒ळ॒य॒ । घृ॒तं । वसा॑नः । परि॑ । या॒सि॒ । निः॒ऽनिजं॑ ॥२॥

पदार्थः—हे परमात्मन्! (वेधस्या) उपदेष्टुमिच्छया भवान् (माहिनं) महापुरुषान् (पर्येषि) प्राप्नोति अथच त्वम् (अत्यो, न) अतिगत्वरपदार्थ इव (अभिवाजं) मदाध्यात्मिक यज्ञं (अभ्यर्षसि) प्राप्नोषि। त्वं (कविः) सर्वज्ञोसि (मृष्टः) तथा शुद्धस्वरूपोसि। (दुरिता) मदीयदुष्कृतानि अपसेधन् विदूरं कृत्वा (सोम) हे परमात्मन्! (मृलय) मां सुखय अथ च (घृतं वसानः) प्रेमभावमुत्पादयन् (निर्निजं) पवित्रताम् (परियासि) उत्पादयासि॥

पदार्थ—हे परमात्मन्! (वेधस्या) उपदेश करनेकी इच्छासे आप (माहिनं) महापुरुषोंको (पर्येषि) प्राप्त होतेहो। और आप (अत्यः) अत्यन्तगतिशील पदार्थके (न) समान (अभिवाजं) हमारे अध्यात्मिक यज्ञको (अभ्यर्षसि) प्राप्त होते हैं। आप (कविः) सर्वज्ञ हैं (मृष्टः) शुद्धस्वरूप हैं (दुरिता) हमारे पापोंको (आपसेधन्) दूर करके (सोम) हे सोम! (मृलय) आप हमको सुख दें। और (घृतं वसानः) प्रेमभावको उत्पन्न करते हुए (निर्निजं) पवित्रताको (परियासि) उत्पन्न करें।

भावार्थ—इस मन्त्रमें सर्वज्ञ परमात्मासे यह प्रार्थना है कि हे परमात्मन्! आप हमको शुद्ध करें। और सबप्रकारके सुख प्रदान करें। यहाँ सोमके लिये कवि शब्द आया है। सायणके मतमें यहां सोमलता को ही कवि=सर्वज्ञ कथन किया गया है। वास्तवमें वेदोंमें कवि शब्द जड़के लिये कहीं भी नहीं आता। इतनाही नहीं किन्तु "कविर्मनीषी, परिभूःस्वयम्भू य० ४०८ इत्यादि वाक्योंमें कवि शब्द परमात्माके लिये आया है इसप्रकार उक्त मन्त्रमें कवि शब्दसे परमात्माका ग्रहण करना चाहिये जड़ सोमका नहीं॥ २॥

पर्जन्यः पिता महिषस्य पर्णिनो

नाभा पृथिव्या गिरिषु क्षयं दधे।

स्वसा॑र॒ आपो॑ अ॒भि गा उ॒तास॑र॒न्त्सं
ग्राव॑भिर्नसते वी॒ते अ॑ध्व॒रे ॥३॥

प॒र्जन्यः॑ । पि॒ता । म॒हि॒षस्य॑ । प॒र्णिनः॑ । नाभा॑ । पृ॒थि॒व्याः । गि॒रिषु॑ । क्षय॑म् । द॒धे॒ । स्वसा॑रः । आपः॑ । अ॒भि । गाः । उ॒त । अ॒स॒र॒न् । सं । ग्राव॑ऽभिः । न॒स॒ते॒ । वी॒ते । अ॒ध्व॒रे ॥३॥

पदार्थः—(वीते अध्वरे) पवित्रेषु यज्ञेषु (ग्रावभिः) रक्षया भवान् (नसते) प्राप्तो भवति (उत) अथ च (गाः) पृथिव्यादि लोकलोकान्तरेषु (अभिसरन्) गच्छन् (आपः) सर्वव्यापको भवान् (स्वसारः) स्वयं गतिशीलः सन् विराजमानो भवति। कथं भूतो भवान् (पर्जन्यः) सर्वतर्पकोस्ति अथ च (पिता) सर्वरक्षकोस्ति। तथा (महिषस्य पर्णिनः) महागतिशीलपदार्थानां नियन्तास्ति अथच (पृथिव्या, नाभा) पृथिव्यादिलोकलोकान्तराणां केन्द्रोभूत्वा (गिरिषु) सकलपदार्थेषु (क्षयं दधे) रक्षामुत्पादयति ॥

पदार्थ—(वीते अध्वरे) पवित्र यज्ञोंमें (ग्रावाभिः) रक्षासे आप (नसते) प्राप्त होते हैं। और (उत) और (गाः) पृथिव्यादि लोकलोकान्तरों में (अभिसरन्) गति करते हुए। (आपः) सर्वव्यापक आप (स्वसारः) स्वयंगतिशील होकर विराजमान होते हैं। आप कैसे हैं (पर्जन्यः) सबके तर्पक हैं और (पिता) सबके रक्षक हैं और (महिषस्य पर्णिनः) बड़ेसे बड़े गतिशीलपदार्थोंके नियन्ता हैं और (पृथिव्या, नाभा) पृथिव्यादि लोकलोकान्तरोंके केन्द्र होकर (गिरिषु) सब पदार्थोंमें (क्षयं दधे) रक्षाको उत्पन्न करते हैं।

भावार्थ—परमात्मा इस चराचर ब्रह्माण्डका उत्पादक है । और पर्जन्यके समान सबका तृप्तिकारक है । उसीपरमात्मासे सब प्रकारकी शान्ति रक्षा उत्पन्न होती हैं ॥ ३ ॥

अथ परमात्माशीलमुपदिशति ।

अब परमात्मा सदाचारका उपदेश करता है ।

जायेव पत्यावधि शेव मंहसे
पज्राया गर्भ शृणुहि ब्रवीमिते ।
अन्तर्वाणीषु प्र चरा सु
जीवसेऽनिन्द्यो वृजने सोम जागृहि ॥४॥

जायाऽइव । पत्यौ । अधि । शेव । मंहसे । पज्रायाः । गर्भ । शृणुहि । ब्रवीमि । ते । अंतः । वाणीषु । प्र । चर । सु । जीवसे । अनिन्द्यः । वृजने । सोम । जागृहि ॥४॥

पदार्थः—( गर्भ ) गृह्णातीति गर्भः, हे सद्गुणग्राहिन् जीवात्मन् ! ( ते ) त्वां ( ब्रवीमि ) कथयामि । त्वं ( शृणुहि ) शृणु ( पज्रायाः ) यथा पृथिव्याः ( पत्यौ, अधि ) पर्जन्यरूपपत्यौ अतिप्रीतिर्भवति । ( जायाइव ) यथा साध्वी स्त्री स्वपतिं प्रीणयति तथा सर्वाभिः स्त्रीभिः कर्तव्यम् एवं कृते ( शेव मंहसे ) प्रत्यधि-कारिभ्यः सुखप्राप्तिर्भवति । ( अनिन्द्यः ) सर्वदोषपरित्यक्तः ( वृजने ) स्वलक्ष्येषु सावधानी भूय ( सोम ) हे सौम्यस्वभाव जीवात्मन् ! ( जागृहि ) जागृहि । अथ च ( अन्तर्वाणिषु ) विद्यारूपवाणीषु

( प्रचरासु ) सर्वत्रव्याप्तासु ( जीवसे ) स्वजीवनाय ( प्रचर ) प्रकर्षेण जागृहि ॥

पदार्थ—( गर्भ ) हे गर्भ ! गृह्णातीति गर्भ हे सद्गुणोंके ग्रहण-करने वाले जीवात्मन् ! ( ते ) तुमको ( ब्रवीमि ) मैं कहता हूँ कि ( शृणुहि ) तुम सुनो । ( पत्न्यायाः ) जिसप्रकार पृथिवीकी ( पत्यौ, अधि ) पर्जन्यरूप पतिमें अत्यन्त प्रीति होती है ( जाया इव ) जैसे कि सदाचारिणी स्त्रीकी अपने पतिमें प्रीति होती है। वैसेही सब स्त्रियोंको अपने २ पतियोंमें प्रीति करनी चाहिए। ऐसा करने पर ( मंहसे ) प्रत्येक अधिकारीके लिये सुखकी प्राप्ति होती है । ( अनिन्द्यः ) सब दोषोंसे दूर होकर ( वृजने ) अपने लक्ष्योंमें सावधान होकर ( सोम ) हे सोमस्वभाव जीवात्मन् ! ( जागृहि ) तुम जागो । और ( अन्तर्वाणीषु ) विद्यारूपी वाणीमें ( प्रचरासु ) जो सबमें प्रचार पाने योग्य है उसमें ( जीवसे ) अपने जीनेके लिये जागृतिको धारण करो ॥

भावार्थ—परमात्मा उपदेश करता है कि हे जीव ! तुमको अपने कर्त्तव्यमें सदैव जागृत रहना चाहिये । जो पुरुष अपने कर्त्तव्यमें नहीं जागता उसका संसारमें जीना निष्फल है । यहां सोम शब्दके अर्थ जीवात्माके हैं । जैसे कि "स्याच्चैकस्य ब्रह्मशब्दवत्" ब्र० सू० २।३।५॥ यहां ब्रह्मसूत्रके अनुसार प्रकरण भेदसे अर्थका भेद हो जाता है इसी प्रकार यहां शिक्षा देनेके प्रकरणसे सोम नाम जीवात्माका है ॥ ४ ॥

यथा पूर्वेभ्यः शतसा अमृध्रः सहस्रसाः
पर्यया वाजमिन्दो ।
एवा पवस्व सुविताय नव्यसे
तव व्रतमन्वापः सचन्ते ॥५॥७॥

यथा । पूर्वेभ्यः । शतऽसाः । अमृध्रः । सहस्रऽसाः । परि-

ऽअयाः । वाजं । इंदो इति । एव । पवस्व । सुवितायं । नव्यंसे । तवं । व्रतं । अनुं । आपः । सचंते ॥५॥

पदार्थः—(इन्दो) हे जीवात्मन् (यथा) येन प्रकारेण (पूर्वेभ्यः) पूर्वजन्मभ्यः (शतसाः) शतशः तथा (सहस्रसाः) सहस्रशः (वाजं) बलानि (पर्ययाः) त्वं प्राप्नोषि (एव) इत्थं (नव्यसे) अस्मै नव्यजन्मने (सुविताय) अभ्युदयाय (तव व्रतं) भवद्व्रतं (अन्वापः) सत्कर्म (सचंते) सङ्गतं भवति अतस्त्वं (पवस्व) पवित्रय ॥

पदार्थ—(इन्दो) हे जीवात्मन् ! (यथा) जैसे (पूर्वेभ्यः) पूर्वजन्मोंके लिये (शतसाः) सैकड़ों (सहस्रसाः) हज़ारों प्रकारके (वाजं) बलोंको (पर्ययाः) तुम प्राप्त हुए (एवा) इसी प्रकार (नव्यसे) इस नवीन जन्मके लिये (सुविताय) अभ्युदयार्थ (तव व्रतं) तुम्हारे व्रतको (अनु आपः) सत्कर्म्म (सचंते) सङ्गत हों। इसलिये आप (पवस्व) पवित्र करें ॥

भावार्थ—परमात्मा उपदेश करता है कि हे जीवो ! तुम्हारे पूर्व जन्म बहुत व्यतीत हुए हैं तुम इस नूतन जन्ममें सत्कर्म करके अभ्युदयशाली और तेजस्वी बनो। यहां पूर्व और उत्तर जन्मोंका कथन सृष्टिको प्रवाहरूपसे अनादि मानकर है। और यही भाव 'सूर्य्याचन्द्रमसौ धाता। यथा पूर्वमकल्पयत्" इस मन्त्रमें वर्णन किया गया है ॥५॥

इति त्र्यशीतितमं सूक्तं सप्तमो वर्गश्च समाप्तः।

यह ८३ वां सूक्त और ७ वां वर्ग समाप्त हुआ।

अथ पञ्चर्चस्य चतुरशीतितमस्य सूक्तस्य—

१—५ पवित्र ऋषिः ॥ पवमानः ॥ सोमो देवता ॥
छन्दः—१, ४ निचृज्जगती । २, ५ विराड्जगती ।
३ जगती ॥ निषादः स्वरः ॥

अथ तितिक्षोपदिश्यते ।

पवित्रं ते वितंतं ब्रह्मणस्पते
प्रभुर्गात्राणि पर्येषि विश्वतः ।
अतप्ततनूर्न तदामो अश्नुते
शृतास इद्वहन्तस्तत्समाशत ॥१॥

पवित्रं । ते । विऽततं । ब्रह्मणः । पते । प्रऽभुः । गात्राणि । परि । एषि । विश्वतः । अतप्तऽतनूः । न । तत् । आमः । अश्नुते । शृतासः । इत् । वहन्तः । तत् । सं । आशत ॥१॥

पदार्थः—( ब्रह्मणस्पते ) हे वेदपते परमात्मन् ! ( ते ) तावकं स्वरूपं ( पवित्रं ) पूतमस्ति । अथ च ( विततं ) विस्तृतमपि वर्तते । भवान् ( प्रभुः ) सर्वेषां स्वामी । तथा ( विश्वतः, गात्राणि ) सकलमूर्तपदार्थानां (पर्येषि) परितो व्यापकोस्ति। अथ च ( अतप्ततनूः ) योहि तपो रहितोसि ( तदामः ) स अपरिपक्वबुद्धिस्तवानन्दं (नाश्नुते) न भोक्तुं शक्नोति । (शृतास इत) तपस्विजन एव ( वहन्तः ) त्वां प्राप्स्यान्ति । ते ( तत ) भवदानन्दं ( समासत ) भोक्ष्यन्ति ।

पदार्थ—(ब्रह्मणस्पते) हे वेदोंके पति परमात्मन् ! (ते) तुम्हारा-स्वरूप (पवित्रं) पवित्र है । और (विततं) विस्तृत है । (प्रभुः) आप सबके स्वामी हैं । और (विश्वतः, गात्राणि) सब मूर्तपदार्थोंके (पर्येषि) चारों ओर व्यापक हैं । (अतप्ततनूः) जिसने अपने शरीरसे तप नहीं किया (तदामः) वह पुरुष कच्चा है । वह तुम्हारे आनन्दको (न अश्नुते) नहीं भोग सकता (शृतास इत्) अनुष्ठानीपुरुषही (वहन्तः) तुमको प्राप्त हो सकते हैं । वे (तत्) तुम्हारे आनन्दको (समाशत) भोग सकते हैं ।

भावार्थ—इस मन्त्रमें तपका वर्णन स्पष्टरीतिसे किया गया है । जो लोग तपस्वी हैं वेही परमात्माको प्राप्त हो सकते हैं अन्य नहीं । यहां शरीरका तप एक उपलक्षणमात्र है । वास्तवमें आध्यात्मिकादि सबप्रकारके तपोंका यहां ग्रहण है ॥ १ ॥

तपोष्पवित्रं विततं दिवस्पदे
शोचन्तो अस्य तन्तवो व्यस्थिरन् ।
अवन्त्यस्य पवीतारमाशवो
दिवस्पृष्ठमधि तिष्ठन्ति चेतसा ॥२॥

तपोः । पवित्रं । विऽततं । दिवः । पदे । शोचन्तः । अस्य । तन्तवः । वि । अस्थिरन् । अवन्ति । अस्य । पवितारं । आशवः । दिवः । पृष्ठं । अधि । तिष्ठन्ति । चेतसा ॥२॥

पदार्थः—हे जगदीश्वर ! (दिवस्पदे) द्युलोके भवतः (तपोः) तपः कर्म (पवित्रं) पूतं (विततं) विस्तृतं पदंविराजते । (अस्य) तस्य पदस्य (शोचन्तः) दीप्तिशालिनः (तन्तवः) किरणाः (व्यस्थिरन्) स्थिराः सन्ति । (अस्य) अमुष्य पदस्य

(पवितारं) उपासकं (आशवः) अस्य पदस्यानन्दं (अवन्ति) रक्षन्ति । उक्तपदोपासकाः (दिवस्पृष्ठमधि) द्युलोकशिखरे (चेतसा) स्वबुद्धिबलेन (तिष्ठन्ति) निवसन्ति ।

पदार्थ—हे परमात्मन् ! (दिवस्पदे) द्युलोकमें आपका (तपोः) तपोरूपी (पवित्रं) पवित्र (विततं) विस्तृतपद विराजमान है । (अस्य) उस पदकी (तन्तवः) किरणें (शोचन्तः) दीप्तिवाली (व्यवास्थिरन्) स्थिर हैं । (अस्य) इस पदके (पवितारं) उपासकको (आशवः) इस पदके आनन्द (अवन्ति) रक्षा करते हैं । उक्तपदके उपासक (दिवस्पृष्ठमधि) द्युलोकके शिखर पर (चेतसा) अपने बुद्धिबलसे (तिष्ठन्ति) स्थिर होते हैं ।

भावार्थ—इस मन्त्र में परमात्मा ने इस बात का उपदेश किया है कि संसार में तपही सर्वोपरि है । जो लोग तपस्वी हैं वे सर्वोपरि उच्च पद को ग्रहण करते हैं । इस लिए हे मनुष्यो ! तुम तपस्वी बनो ॥२॥

अरूरुचदुषसः पृश्निरग्रिय उक्षा
बिभर्ति भुवनानि वाजयुः ।
मायाविनो ममिरे अस्य मायया
नृचक्षसः पितरो गर्भमा दधुः ॥३॥

अरूरुचत् । उषसः । पृश्निः । अग्रियः । उक्षा । बिभर्ति । भुवनानि । वाजऽयुः । मायाऽविनः । ममिरे । अस्य । मायया । नृऽचक्षसः । पितरः । गर्भं । आ । दधुः ॥३॥

पदार्थः—पूर्वोक्तपरमात्मा (उषसः) रवेः प्रभामण्डलम् (अरूरुचत) प्रकाशयते । अथच प्राश्नुते सर्वमिति (पृश्निः)

प्रलयकारकः ( उक्षा ) महान् परमेश्वरः ( भुवनानि ) सर्वान्लोकान् ( बिभर्ति ) पुष्णाति । तथा स जगदीश्वरः ( वाजयुः ) सकलबलाधारोस्ति । ( अस्य ) अमुष्य परमात्मनः ( मायया ) शक्त्या ( मायाविनोममिरे ) मायिनोम्रियन्ते । ( नृचक्षसः ) स सर्वज्ञईश्वरः ( पितरः ) सर्वोत्पादकाः ( गर्भं ) संसाररूपगर्भमिमं ( आदधुः ) दधाति ।

पदार्थ—पूर्वोक्तपरमात्मा ( उषसः ) सूर्य्यके प्रभामण्डलको ( अरूरुचत् ) वह प्रकाश करताहै । और ( पृश्निः ) माश्नुते सर्वमितिपृश्णिः, प्रलयकाल में जो सबको भक्षण करे उसका नाम पृश्णिहै । (उक्षा) उक्षतीतिउक्षा इति महन्नामसुपठितम्—नि. रु. १—१२—३ । जो इस सम्पूर्णसंसार को अपने प्रेमवारि से सिञ्चित करे उस महान पुरुषका नाम उक्षा है । (भुवनानि बिभर्ति) वह सब भुवनों का भरणपोषण करता है । ( वाजयुः ) सब बलों का आधार है । (अस्य मायया) उसकी शक्ति से ( मायाविनो ममिरे ) मायावीलोक मर जातेहैं । ( नृचक्षसः ) वह सर्वज्ञ ( पितरः ) सबको उत्पन्न करनेवाला ( गर्भं ) इस संसाररूपी गर्भको ( आदधुः ) धारण करता है ।

भावार्थ—इस मन्त्र में परमात्माके स्वरूपका वर्णनहै कि वह प्रकाशस्वरूप है । और लोकलोकान्तरों का अधिष्ठान है । सब बलोंका केन्द्र है और सब मायावियों की माया को मर्दन करनेवाला है । तात्पर्य्य यह है कि उसी पूर्ण पुरुषकी उपासना से पुरुष तपस्वी बन सकताहै ॥३॥

गन्धर्व इत्था पदमस्य रक्षति
पाति देवानां जनिमान्यद्भुतः
गृभ्णाति रिपुं निधया निधापतिः
सुकृत्तमा मधुनो भक्षमाशत ॥४॥

गंधर्वः । इत्था । पदं । अस्य । रक्षति । पाति । देवानां । जनिमानि । अद्भुतः । गृभ्णाति । रिपुं । निऽधया । निधाऽपतिः । सुकृत्ऽतमाः । मधुनः । भक्षं । आशत ॥४॥

पदार्थः—( गन्धर्वः ) गांधरतीति गन्धर्वः पृथिव्यादि लोक-लोकान्तराणांधारकः ( इत्था ) अयंसत्यनामसु पठितो निरुक्ते ३ । १३ । १० । सत्यस्वरूपः परमात्मा ( देवानां जनिमानि ) विदुषांजन्मानि ( रक्षति ) गोपायति । स परमेश्वरः ( अद्भुतः ) महानस्ति अद्भुत इति महन्नामसु पठितंनिरुक्ते ३ । १३ । १३ ( निधापतिः ) सर्वशक्तीनांस्वामी ( निधया ) स्वशक्त्या ( रिपुं ) स्वानुकूलशक्तिं ( गृभ्णाति ) स्वाधीनंकरोति । ( अस्य ) अमुष्य ( मधुनः ) आनन्दमयस्य परमात्मनः ( पदं ) पदं ( सुकृत्तमाः ) सुकृतितराः पुरुषाः ( भक्षं ) भोगयोग्यं विधाय ( आशत ) तिष्ठन्ति । तथापूर्वोक्तानुपासकान् ( पाति ) रक्षति ॥

पदार्थ—( गांधरतीतिगन्धर्वः ) जो पृथिव्यादि लोकलोकान्तरों को धारण करे उसका नाम यहां गन्धर्व है । ( इत्था ) इति सत्यनामसुपठितं नि॰ रू॰ ३—१३—१० । वह सत्यरूप परमात्मा ( देवानां जनिमानि ) विद्वानोंके जन्म की ( रक्षति ) रक्षा करता है । ( अद्भुतः ) बड़ा है अद्भुतइति महन्नासुपठितं नि॰ रू॰ ३—१३—१३ ( निधापतिः ) सब शक्तियों का पति ( निधया ) अपनी शक्ति से ( रिपुं ) अपने से प्रतिकूल शक्तिवाले शत्रुको ( गृभ्णाति ) स्वाधीन करता है। ( अस्यमधुनः पदं ) इस अनन्दमयपरमात्मा के पदको ( सुकृत्तमाः ) पुण्यात्मालोग ( भक्षं ) भोग्य बना कर ( आशत ) स्थिर होते हैं । और उक्त उपासकों की ( पाति ) रक्षा करता है ।

भावार्थ–(तद्विष्णोः परमंपदं सदापश्यन्ति सूरयः) उस विष्णु के परमपद को सदा विद्वान् लोग देखते हैं । उसी व्यापक परमात्माके परमपदका इस मन्त्र में वर्णन किया है । कि उस परमपदको उपासक लोग ब्रह्मानन्द को भोगते हैं अन्य नहीं ॥४॥

हविर्हविष्मो महि सद्म दैव्यं
नभो वसानः परि यास्यध्वरम् ।
राजा पवित्ररथो वाजमारुहः
सहस्रभृष्टिर्जयसि श्रवो बृहत् ॥५॥

हविः । हविष्मः । महि । सद्म । दैव्यं । नभः । वसानः । परि । यासि । अध्वरं । राजा । पवित्रऽरथः । वाजं । आ । अरुह । सहस्रऽभृष्टिः । जयसि । श्रवः । बृहत् ॥

पदार्थः—हे परमेश्वर ! (हविः) त्वंहविःस्वरूपोसि । अथच (हविष्मः) हविर्वानसि । (महि) महानसि । (दैव्यं) दिव्यस्वरूपवान् (नभः) विस्तृत आकाशः (सद्म) त्वदीयं-गृहमस्ति । अस्मिन्गृहे (वसानः) निवसन् (अध्वरं) अहिंसा-रूपं यज्ञं (परियासि) प्राप्नोषि । तथा (राजा) त्वंसर्वत्र विरा-जसे । अथच त्वं (पवित्ररथः) पूतगतिवान् (वाजमारुहः) सर्वविधबलधारकोसि । तथा (सहस्रभृष्टिः) नानाविधपवित्रतां-अदधत-(बृहत, श्रवः) सर्वोत्कृष्टयशोबिभ्रत् (जयसि) अखिला-न्जनान् विजयसे ॥

पदार्थ—हे परमात्मन् (हविः) आप हवि हैं । (हविष्मः) और

हविवाले हैं । ( महि ) बड़े हैं । ( दैव्यं ) दिव्यरूपवाला ( नभः ) यह विस्तृत आकाश ( सद्मः ) आप का गृहहै । इसमें ( वसानः ) निवास करते हुए (अध्वरं) अहिंसारूप यज्ञको ( परियासि ) प्राप्त होतेहैं । (राजा) आप सर्वत्र विराजमान हो रहे हैं । ( पवित्ररथः ) पवित्रगतिवाले ( वाजमारूहः ) सब प्रकारके बलों को धारण किये हुयेहैं । ( सहस्रभृष्टिः ) अनन्त प्रकारकी पवित्रताओं को धारण किये हुये हैं ( बृहत्श्रवः ) सर्वोपरियशको धारण किये हुये आप जयसि सबको जय करते हैं ।

भावार्थ—इस मन्त्र में परमात्मा को सहस्रशक्तियोंवाला वर्णन किया है। जैसा कि सहस्र शीर्षापुरुष इस मन्त्र में वर्णन किया गया है । उस अनन्तशक्ति युक्त परमात्मा की उपासना करके जो पुरुष तपस्वी बनते हैं वे इस भवनिधि से पार होतेहैं ॥५

इति त्र्यशीतितमंसूक्तमष्टमोवर्गश्च समाप्तः ।

यह ८३ वां सूक्त और ८ वां वर्ग समाप्त हुआ ।

अथ पञ्चर्चस्य चतुरशीतितमस्य सूक्तस्य—

१–५ प्रजापतिर्वाच्य ऋषिः ॥ पवमानः सोमो देवता ॥
छन्द–१, ३ विराड्जगती । ४ जगती । २
निचृत्त्रिष्टुप् । ५ त्रिष्टुप् ॥ स्वरः—
१,३,४ निषादः । २, ५ धैवतः ॥

पवस्व देवमादनो विचर्षणिरप्सा
इन्द्राय वरुणाय वायवे ।
कृधी नो अद्य वरिवः स्वस्तिमदुरुक्षितौ
गृणीहि दैव्यं जनम् ॥१॥

पर्वस्व । देवऽमादनः । विऽचर्षणिः । अप्साः । इंद्राय । वरुणाय । वायवे । कृधि । नः । अद्य । वरिवः । स्वस्तिऽमत् । उरुऽक्षितौ । गृणीहि । दैव्यं । जनं ॥१॥

पदार्थः—(देवमादनः) विदुषामामोदकारकपरमात्मन् ! (विचर्षणिरप्साः) कर्मणांद्रष्टा (इन्द्राय) कर्मयोगिने (वरुणाय) विज्ञानिने (वायवे) ज्ञानयोगिने (पवस्व) त्वं पवित्रतांदेहि अथच (नः) अस्मान् (अद्य) अस्मिन्समये (वरिवः) धनिनः (कृधि) कुरु। तथा (स्वस्तिमत्) भवान् स्वकीयेन ज्ञानेन मामविनाशिनं करोतु। अथच (उरुक्षितौ) विस्तृतेऽस्मिन्भूगर्भे (जनं) अमुम्पुरुषं (दैव्यं) दिव्यं विधाय (गृणीहि) अनुगृह्णातु ॥

पदार्थ—(देवमादनः) हे विद्वानोंके आनन्दके वर्द्धकपरमात्मन् ! (विचर्षणिरप्सा) हे कर्म्मोंका द्रष्टा ! (इन्द्राय) कर्म्मयोगीके लिये (वरुणाय) विज्ञानीके लिये (वायवे) ज्ञानीके लिये (पवस्व) आप पवित्रता प्रदान करें। और (नः) हमको (अद्य) इस समये (वरिवः) धनयुक्त करें। और (उरुक्षितौ) इस विस्तृत भूमण्डलमें (जनं) इस जनको (दैव्यं) दिव्यबनाकर (गृणीहि) अनुग्रह करें।

भावार्थ—परमात्मा उपदेश करता है कि हे मनुष्यो ! आप ज्ञानी विज्ञानी बनकर कर्म्मोंके नियन्ता देवसे यह प्रार्थना करो कि हे भगवन् ! आप अपने ज्ञानद्वारा हमको अविनाशी बनाएँ। और हमारी दरिद्रता मिटा कर आप हमको ऐश्वर्य्ययुक्त करें ॥१॥

आ यस्तस्थौ भुवनान्यमर्त्यो

विश्वानि सोमः परि तान्यर्षति ।

कृण्वन्त्सञ्चृतं विचृतमभिष्टय

इन्दुः सिषक्त्युषसं न सूर्यः ॥२॥

आ । यः । तस्थौ । भुवनानि । अमर्त्यः । विश्वानि । सोमः । परि । तानि । अर्षति । कृण्वन् । सम्ऽचृतं । विऽचृतं । अभिष्टये । इंदुः । सिषक्ति । उषसं । न । सूर्यः ॥२॥

पदार्थः—(इन्दुः) प्रकाश-स्वरूपः परमेश्वरः (सूर्यः) भानुः (उषसं न) ऊषेव (सिषक्ति) संयुनक्ति। अथच (अभिष्टये) ऐश्वर्याय (संचृतं) प्रकाशयुतं तथा (विचृतं) अज्ञान-शून्यं (कृण्वन्) कुर्वाणः (आतस्थौ) ममहृदयआगत्य विराजमानोभवतु (यः) यः परमेश्वरः (अमर्त्यः) मरणधर्मरहितोऽस्ति। तथा (विश्वानिभुवनानि) अखिललोकलोकान्तराणां (परि, अर्षति) चतुर्दिक्षुव्यापकोस्ति सः (सोमः) सौम्यस्वभावः परमात्मा अस्मान् रक्षतु ॥

पदार्थ—(इन्दुः) प्रकाशस्वरूप परमात्मा (सूर्य्यः) सूर्य्यके (उषसं) उषाके (न) समान (सिषक्ति) संयुक्त करता है। और अभिष्टये) ऐश्वर्य्य के लिये (संचृतं) प्रकाशों से संयुक्त और (विचृतं) अज्ञानोंसे रहित (कृण्वन्) करता हुआ (आतस्थौ) आकर हमारे हृदय-में विराजमानहो। (यः) जो परमात्मा (अमर्त्यः) अविनाशी है। और (विश्वानि भुवनानि) सब लोकलोकान्तरोंके (परि, अर्षति) चारों ओर व्यापक है। वह (सोमः) सोमगुणसम्पन्नपरमात्मा हमारी रक्षा करे।

भावार्थ—इस मन्त्र में परमात्मा ने ज्ञानी विज्ञानी लोगों को सूर्य्यकी प्रभा के समान वर्णन किया। तात्पर्य्य यह है कि ज्ञान विज्ञान-

द्वारा ही पुरुष तेजस्वी और सूर्य्यके समान प्रभाकर बन सकता है। अन्यथा नहीं ॥२॥

आ यो गोभिः सृज्यत
ओषधीष्वा देवानां सुम्न इषयन्नुपावसुः ।
आ विद्युता पवते धारया सुत
इन्द्रं सोमो मादयन्दैव्यं जनम् ॥३॥

आ । यः । गोभिः । सृज्यते । ओषधीषु । आ देवानां । सुम्ने । इषयन् । उपऽवसुः । आ । विऽद्युता । पवते । धारया । सुतः । इंद्रं । सोमः । मादयन् । दैव्यं । जनं ॥३॥

पदार्थः—(सोमः) जगदुत्पादकोजगदीश्वरः (दैव्यंजनं) दिव्यगुणं (इन्द्रं) कर्मयोगिनं (मादयन्) आनन्दयन् (उपावसुः) स्थिरोभवति । (यः) यः परमेश्वरः (गोभिः) पृथिव्यादिसूक्ष्मपञ्चतन्मात्रमारभ्य (ओषधिषु आ) ओषधिपर्यन्तं (आसृज्यते) सकलं ब्रह्माण्डं विरचयति । अथच (देवानां) विद्वज्जनानां (सुम्ने) सुखस्य (इषयन्) इच्छांकुर्वन् (विद्युता) विद्युद्रूपशक्त्यासर्वान् पवित्रयति । अथ यः परमेश्वरः (धारयासुतः) स्वयमानन्दमयोत्ररीवर्ति ॥

पदार्थ—(सोमः) परमात्मा (दैव्यंजनं) दिव्यगुणवाले (इन्द्रं) कर्म्मयोगीको (मादयन्) आनन्द करता हुआ (उपावसुः) स्थिर होताहै। (यः) जो परमात्मा (गोभिः) पृथिव्यादिकों की सूक्ष्म पञ्चतन्मात्रोंसे लेकर (ओषधिषुआ) ओषधियों तक (आसृज्यते) सब ब्रह्माण्डोंको

रचता है। और (देवानां) विद्वानों के (सुम्ने) सुखके लिये (इषयन्) इच्छा करता हुआ (विद्युता) विद्युत् रूपी शक्तिसे सबको पवित्र करताहै। और (धारयासुतः) सुधामय है।

भावार्थ—जो विद्वान् पुरुष ईश्वरीय विद्या को प्राप्त होकर संसार की रक्षा करना चाहते हैं परमात्मा उनके सुखकी सदैववृद्धि करता है ॥३॥

एष स्य सोमः पवते सहस्र-
जिद्धिन्वानो वाचमिषिरामुषर्बुधम्।
इन्दुः समुद्रमुदियर्ति वायुभिरेन्द्रस्य
हार्दि कलशेषु सीदति ॥४॥

एषः। स्यः। सोमः। पवते। सहस्रऽजित्। हिन्वानः। वाचं। इषिरां। उषःऽबुधं। इंदुः। समुद्रं। उत्। इयर्ति। वायुऽभिः। आ। इंद्रस्य। हार्दि। कलशेषु। सीदति ॥४॥

पदार्थः—(सहस्रजित्) अनन्तशक्तिसम्पन्नः परमेश्वरो-विदुषां (इषिरां) ज्ञानप्रदां (वाचं) वाणीं (उषर्बुधं) याहि-ऊषाकालेप्रबोधयति तां (हिन्वानः) प्रेरयन् (पवते) पवित्रयति। (एषः स्यः सोमः) असावेषः सौम्यगुणसम्पन्नः परमेश्वरः (इन्दुः) प्रकाशस्वरूपोऽस्ति। अथच (समुद्रं) अन्तरिक्षं (उदियर्ति) वर्षणशीलंकरोति। तथा (वायुभिः) स्वीयज्ञानशक्तिभिः (इन्द्र-स्य) ज्ञानयोगिनः (हार्दि) हृदयव्यापिनि (कलशेषु) हृदया-काशे (सीदति) स्थिरो भवति।

पदार्थ—(सहस्रजित्) अनन्तशक्तिसम्पन्न परमात्मा विद्वानोंकी (इषिरां) ज्ञानप्रद (वाचं) वाणीको (उषर्बुधं) जो उषाकालमें जगानेवाली है। उसको (हिन्वानः) प्रेरणा करता हुआ (पवते) पवित्र बनाता है। (एष स्यः सोमः) वह परमात्मा (इन्दुः) प्रकाशस्वरूप है। और (समुद्रं) अन्तरिक्षको (उदियर्ति) वर्षणशील बनाता है। और (वायुभिः) अपनी ज्ञानरूपी शक्तियोंसे (इन्द्रस्य) ज्ञानयोगीके (हार्दि) हृदयव्यापी (कलशेषु) हृदयआकाशमें (सीदति) स्थिर होता है।

भावार्थ—"समुद्रमिति अन्तरिक्षनामसु पठितं" नि० रु० २।१०।९॥ समुद्रवन्त्यस्मादाप इति समुद्रं" जिससे जलोंका प्रवाह बहे उसका नाम यहां समुद्र है। तात्पर्य्य यह है कि जिस परमात्माने अन्तरिक्षलोकको वर्षणशील और पृथ्वीलोकको दृढ़ताप्रदान की है। वह लोकलोकान्तरोंका पति परमात्मा अपनी ज्ञानगतिसे कर्मयोगीके हृदयमें आकर विराजमान होता है।

अभि त्यं गावः पयसा पयोवृधं
सोमं श्रीणन्ति मतिभिः स्वर्विदम् ।
धनञ्जयः पवते कृत्व्यो रसो
विप्रः कविः काव्येना स्वर्चनाः ॥५॥९॥

अभि । त्यं । गावः । पयसा । पयःऽवृधं । सोमं । श्रीणंति । मतिऽभिः । स्वःऽविदं । धनंऽजयः । पवते । कृत्व्यः । रसः । विप्रः । कविः । काव्येन । स्वःऽचनाः ॥५॥

पदार्थः—हे जगदीश ! (पयोवृधं) ज्ञानवृद्धो भवान् (त्यं) तं भवन्तं (गावः) इन्द्रियाणि (पयसा) ज्ञानद्वारा (अभि श्रीणन्ति) संसेवन्ते। अथ च (सोमं) सौम्यगुणसम्पन्नं

भवन्तं (स्वर्विदं) देवतानां लक्ष्यस्थानीयं त्वां (मतिभिः) ब्रह्म-विषयिणीभिर्बुद्धिभिः (पवते) विद्वांसः साक्षात्कुर्वंते। भवान् (धनञ्जयः) सकलधनजेतास्ति। तथा (कृत्व्यः) सर्वासांशक्तीनां केन्द्रस्वरूपो भवान् (रसः) आमोदरूपोस्ति अथ च (विप्रः) मेधाव्यस्ति। (कविः) सर्वज्ञोस्ति। (काव्येन स्वर्चनाः) स्वीयाखिलशक्त्या सर्वलोक-लोकान्तराणां प्रलयकर्तास्ति॥

**पदार्थ**—हे परमात्मन्! (पयोवृधं) ज्ञानसे वृद्धिकोप्राप्त जो आप हैं (त्वं) उस आपको (गावः) इन्द्रियें (पयसा) ज्ञानद्वारा (अभि श्रीणन्ति) सेवन करतीं हैं। और (सोमं) सोमगुणविशिष्ट आपको (स्वर्विदं) जो आप देवताओंके लक्ष्यस्थानीय हैं आपको (मतिभिः) ब्रह्मविषयिणी बुद्धिद्वारा (पवते) विद्वानलोग साक्षात्कार करते हैं। (धनञ्जयः) आप धनञ्जय हैं। सम्पूर्ण धनोंके जेता हैं। (कृत्व्यः) सब शक्तियोंके केन्द्र हैं। (रसः) आनन्दरूप हैं। (विप्रः) मेधावी हैं। (कविः) सर्वज्ञ हैं। (काव्येन स्वर्चनाः) अपनी सर्वशक्तिसे सबलोक लोकान्तरोंके प्रलयकर्त्ता हैं।

**भावार्थ**—जो परमात्मा पूर्वोक्तगुणोंसे सम्पन्न है। उसका ज्ञानयोगी अपने चित्तवृत्तिनिरोधरूपी योगद्वारा साक्षात्कार करते हैं॥९॥

इति चतुरशीतितमं सूक्तं नवमोवर्गश्च समाप्तः।

यह ८४ वां सूक्त और नवां वर्ग समाप्त हुआ।

---

१–१२ वेनो भार्गव ऋषिः॥ पवमानः सोमो देवता॥ छन्दः—१, ५, ९, १० विराड्जगती। २,७ निचृज्जगती। ३ जगती। ४, ६ पादनिचृज्जगती। ८ आर्चीस्वराड्जगती। ११ भुरिक् त्रिष्टुप्। १२ त्रिष्टुप्॥ स्वरः—१–१० निषादः। ११, १२ धैवतः॥

इन्द्राय सोम सुषुतः परि
स्रवापामीवा भवतु रक्षसा सह।
मा ते रसस्य मत्सत द्वयाविनो
द्रविणस्वन्त इह सन्त्विन्दवः ॥१॥

इन्द्राय। सोम। सुऽसुतः। परि। स्रव। अप। अमीवा। भवतु। रक्षसा। सह। मा। ते। रसस्य। मत्सत। द्वयाविनः। द्रविणस्वंतः। इह। संतु। इन्दवः॥१॥

पदार्थः—(इन्दवः) कर्मयोगिनोऽस्मिन्संसारे (द्रविणस्वन्तः) ऐश्वर्यवन्तो भूत्वा (इह) अस्मिन्नध्वरे (सन्तु) विराजन्ताम्। अथ च (द्वयाविनः) सत्यासत्याविवेकिनोमायाविपुरुषाः (ते रसस्य) भवदीयानन्दस्य (मा मत्सत) लाभं नाप्नुवन्तु। (सोम) हे जगत्स्रष्टः! (इन्द्राय) कर्मयोगिने (सुषुतः) साक्षाद्भूतो भवान् (परिश्रव) ज्ञानद्वारा तदीयहृदयमागत्य विराजताम्। अथ च (रक्षसा सह) राक्षसैः कृताः कर्मयोगिनां (अमीवा) रोगाः (अप भवन्तु) दूरी भवन्तु।

पदार्थ—(इन्दवः) कर्म्मयोगी इस संसारमें (द्रविणस्वंतः) ऐश्वर्यवाले होकर (इह) इस यज्ञमें (सन्तु) विराजमान हों। और (द्वयाविनः) झूठ सचका विवेक न करने वाले मायावि पुरुष (ते रसस्य) तुम्हारे आनन्दका (मा मत्सत) मत लाभ उठावें (सोम) हे जगत्कर्त्ता परमात्मन्! (इन्द्राय) कर्म्मयोगीके लिये (सुषुतः) साक्षात्कारको प्राप्त हुए आप (परिस्रव) ज्ञानद्वारा उसके हृदयमें आकर विराजमान होवो। और (रक्षसा सह) राक्षसों करके किये हुए कर्म्मयोगियोंके रोगादिक (अपभवतु) दूर हों।

**भावार्थ**—जो लोग सत्यासत्यमें विवेक नहीं कर सकते और असत्यको त्यागकर दृढ़तापूर्वक सत्यका ग्रहण नहीं कर सकते वे सदैव सत्यामृतके सागरमें गोते खाते रहते हैं। इसलिये मनुष्यको चाहिए कि वह सत्यासत्यका विवेक करके सत्यग्राही बनें ॥१॥

अस्मान्त्समर्ये पवमान चोदय
दक्षो देवानामसि हि प्रियो मदः ।
जहि शत्रूँरभ्या भन्दनायतः
पिबेन्द्र सोममव नो मृधो जहि ॥२॥

अस्मान् । सऽमर्ये । पवमान । चोदय । दक्षः । देवानाँ । असि । हि । प्रियः । मदः । जहि । शत्रून् । अभि । आ । भंदनाऽयतः । पिब । इन्द्र । सोमं । अव । नः । मृधः । जहि ॥२॥

**पदार्थः**—(पवमान) सर्वपवितः परमात्मन् ! त्वं (समर्ये) वैदिकाध्वरेषु (अस्मान्) नः (चोदय) प्रेरय । त्वं (देवानां) दिव्यगुणसम्पन्नानां विदुषां (दक्षोसि) प्रेरकोसि । (हि) यतः (प्रियो मदः) आनन्दस्य प्रियोस्ति भवान् (इन्द्र) ऐश्वर्यसम्पन्न (शत्रूञ्जहि) त्वमन्यायकारिशत्रून्नाशय । अथ च (अभ्या) सर्वथा महाप्राप्तोभव । (भन्दनायतः) उपासकस्य (सोमं) स्तवनं (पिब) भवान् गृह्णातु । तथा (नो मृधः) मम यज्ञेभ्यो विघ्नकारिणः (अव-जहि) दूरय ।

**पदार्थ**—(पवमान) हे सबको पवित्र करनेवाले परमात्मन् ! (समर्ये) वैदिक यज्ञोंमें आप (अस्मान्) हमको (चोदय) प्रेरणा करें ।

आप (देवानां) विद्वानोंके (दक्षोऽसि) प्रेरक हैं। (हि) क्योंकि (प्रियो मदः) आनन्दके प्यारे हैं। (शत्रूञ्जहि) आप अन्यायकारी शत्रुओंका नाश करें। और (अभ्या) सब प्रकारसे हमको प्राप्त होएँ (मन्दनायतः) उपासकके (सोमं) स्तुतिको (पिब) आप ग्रहण करें। और (नोमृधः) हमारे यज्ञोंसे विघ्नकारियोंको (अव जहि) दूर करें।

**भावार्थ**—जो लोग परमात्मपरायण होकर परमात्माके स्वरूपमें ध्यानद्वारा प्रविष्ट होते हैं। परमात्मा उन्हें अवश्यमेव ग्रहण करता है ॥२॥

अदब्ध इन्दो पवसे मदिन्तम
आत्मेन्द्रस्य भवसि धासिरुत्तमः।
अभि स्वरन्ति बहवो मनीषिणो
राजानमस्य भुवनस्य निंसते ॥३॥

अदब्धः। इंदो इति। पवसे। मदिन्ऽतमः। आत्मा। इन्द्रस्य। भवसि। धासिः। उत्ऽतमः। अभि। स्वरंति। बहवः। मनीषिणः। राजानं। अस्य। भुवनस्य। निंसते ॥३॥

**पदार्थः**—(इन्दो) हे प्रकाशस्वरूप जगदीश्वर! त्वं (अदब्धः) अदम्भनीयोऽसि। तथा (मदिन्तमः) आमोदरूपोसि। अथ च त्वं (पवसे) सर्वान्पवित्रयसि। तथा (इन्द्रस्य) प्रकाशपूर्णविद्युदादिपदार्थेषु (आत्मा भवसि) व्यापकरूपेण विराजसे। तथा (धासिरुत्तमः) उत्तमोत्तमगुणान् धारयसि। (बहवो मनीषिणः) प्रभूताज्ञानिविज्ञानिनः पुरुषाः (अभि स्वरन्ति) भवत स्तवनं कुर्वन्ति। अथ च (अस्य भुवनस्य) अस्य संसारस्य (राजानं) प्रकाशकं भवन्तं (निंसते) सन्मन्यन्ते ॥

**पदार्थ**—(इन्दो) हे प्रकाशस्वरूपपरमात्मन् ! आप (अदब्धः) किसीसे दबाये नहीं जा सकते। और (मदिन्तमः) आनन्दस्वरूप हैं। (पवसे) पवित्र करते हैं। (इन्द्रस्य) प्रकाशयुक्त विद्युदादिपदार्थोंमें (आत्मा भवसि) व्यापकरूपसे विराजमान हो रहे हैं। और (धासिरुत्तमः) उत्तमोत्तमगुणोंको धारणकरा रहे हैं। (बहवो मनीषिणः) बहुतसे ज्ञानी विज्ञानीलोग (अभिस्वरन्ति) आपकी स्तुति करते हैं। और (अस्य भुवनस्य) इस संसारके (राजानं) प्रकाशक आपको (निंसते) मानते हैं।

**भावार्थ**—इस मन्त्रमें परमात्माको आत्मा शब्दसे वर्णन किया है। अर्थात् "अतति सर्वत्रव्याप्नोतीति आत्मा" जोसर्वत्र व्यापक हो उसका नाम आत्मा है। यहांसर्वोत्पादकसोमपरमात्मा को व्यापकरूपसे वर्णन किया है। जो लोग सोमशब्द को जड़लतावाचक ही मानते हैं उनको इस मंत्रसे शिक्षा लेनी चाहिये कि सोम यहां सर्वव्यापक परमात्माका नाम है ॥३॥

सहस्रणीथः शतधारो अद्भुत
इन्द्रायेन्दुः पवते काम्यं मधु।
जयन्क्षेत्रमभ्यर्षा जयन्नप उरुं
नो गातुं कृणु सोम मीढ्वः ॥४॥

सहस्रऽनीथः। शतऽधारः। अद्भुतः। इन्द्राय। इन्दुः। पवते। काम्यं। मधु। जयन्। क्षेत्रं। अभि। अर्ष। जयन्। अपः। उरुं। नः। गातुं। कृणु। सोम। मीढ्वः ॥४॥

**पदार्थः**—(सहस्रनीथः) भवान् सहस्राक्षोसि। तथा (शतधारा) नानाविधामोदानां स्रोतः। अथ च (अद्भुतः) आश्चर्यमयोस्ति। (इन्द्राय इन्दुः) ऐश्वर्यस्य प्रकाशकश्चास्ति।

( काम्यं मधुः ) कामनारूपमाधुर्यं ( पवते ) पवित्रयति । अथच ( क्षेत्रं जयन् ) विस्तृतमिमं ब्रह्माण्डं तथा ( अपः ) कर्माणि च स्ववशे कुर्वन् ( नो गातुं ) मदीयामुपासनां ( उरुं कृणु ) विस्तारयतु । ( सोम ) हे परमात्मन् ! भवान् विविधविधानामानन्दानां ( मीढ्वः ) सिञ्चनकर्त्ताऽस्ति ॥

पदार्थ--( सहस्रनीथः ) आप सहस्राक्ष हैं । ( शतधारा ) अनेक प्रकारके आनन्दोंके श्रोत हैं । ( अद्भुतः ) आश्चर्य्यमय हैं । ( इन्द्रायइन्दुः ) ऐश्वर्य्यके प्रकाशक हैं । ( काम्यं मधु ) कामनारूप मधुरताको ( पवते ) पवित्र करनेवाले हैं । और ( क्षेत्रं जयन् ) इस विस्तृत ब्रह्माण्डको वशीभूत करते हुए और ( अपः ) कर्म्मोंको वशीभूत करते हुए ( नोगातुं ) हमारी उपासनाको ( उरुं कृणु ) विस्तृत करें । ( सोम ) हे परमात्मन् ! आप सबप्रकारके आनन्दोंको ( मीढ्वः ) सिञ्चनकरनेवाले हैं ।

भावार्थ—परमात्मा में ज्ञान की अनन्तशक्तियें हैं । और आनन्द की अनन्तशक्तियें हैं । बहुत क्या ! सब आनन्दोंकी वृष्टि करनेवाला एकमात्र परमात्मा ही है । इसलिये उपासकोंको चाहिये कि उस सर्वैश्वर्य्यप्रदपरमात्माकी उपासना करें ॥९॥

कनि॑क्रदत्क॒लशे॒ गोभि॑रज्यसे॒
व्य१॒॑व्ययं॒ सम॒या वार॑मर्षसि ।
म॒र्मृ॒ज्यमा॑नो॒ अत्यो॒ न सा॑न॒सि-
रिन्द्र॑स्य सोम ज॒ठ॒रे॒ सम॑क्षरः ॥५॥

कनि॑क्रदत् । क॒लशे॑ । गोभिः॑ । अ॒ज्य॒से॒ । वि । अ॒व्यय॑म् । स॒मया॑ । वार॑म् । अ॒र्ष॒सि॒ । म॒र्मृ॒ज्यमा॑नः । अत्यः॑ । न । सा॒न॒सिः । इन्द्र॑स्य । सो॒म॒ । ज॒ठरे॑ । सम् । अ॒क्ष॒रः॒ ॥५॥

पदार्थः—हे जगन्नियन्तः ! (कनिक्रदत्) स्वसत्तया-गर्जन् (कलशे) विदुषामन्तःकरणे (गोभिः) अन्तःकरणवृत्तिभिः (अज्यसे) साक्षाद्भवसि (अव्ययं) स्वाऽव्ययस्वरूपेण (समया) सह (वारं) वरणीयं ज्ञानपात्रं (अर्षसि) प्राप्तो भवसि । (मर्मृज्यमानः) साक्षात्कृतः (अत्यो न) गत्वरपदार्थ इव (सानसिः) उपासनीयोभवान् (इन्द्रस्य) कर्मयोगिनः (जठरे) अन्तःकरणे (सोम) हे परमात्मन् ! (समक्षरः) सम्यग् विराजमानो भवसि॥५॥

पदार्थ—हे परमात्मन् (कनिक्रदत्) स्वसत्तासे गर्जतेहुए (कलशे) विद्वानों के अन्तःकरण में (गोभिः) अन्तःकरण की वृत्तियोंसे (अज्यसे) साक्षात्कारको प्राप्त होतेहैं। (अव्ययं) अपने अव्यय स्वरूपके (समया) साथ (वारं) वर्णनीयज्ञानके पात्रको (अर्षसि) प्राप्त होते हैं। (मर्मृज्य मानः) साक्षात्कारको प्राप्त (अत्यो न) गतिशील पदार्थोंके समान (सानसिः) उपासनायोग्य आप (इन्द्रस्य) कर्मयोगीके (जठरे) अन्तःकरणमें (सोम) हे सर्वोत्पादक परमात्मन् आप (समक्षरः) भली-भांति विराजमान होते हैं।

भावार्थ—परमात्मा का अविनाशीभाव जब मनुष्य के हृदय में आता है तो मनुष्य मानों ईश्वर के समीप पहुँच जाताहै। इसी का नाम परमात्मप्राप्ति है। वास्तव में परमात्मा किसी के पास चल कर नहीं आता। और न किसी से दूर जाता। इसी अभिप्राय से वेदमें लिखा है कि "तद्दूरे तद्वन्तिके" अर्थात् अज्ञानियोंसे दूर और ज्ञानियोंके समीपहै।

स्वादुः पवस्व दिव्याय जन्मने
स्वादुरिन्द्राय सुहवीतुनाम्ने ।
स्वादुर्मित्राय वरुणाय वायवे
बृहस्पतये मधुमाँ अदाभ्यः ॥६॥१०॥

स्वादुः । पवस्व । दिव्याय । जन्मने । स्वादुः । इंद्राय । सुहवीतुऽनाम्ने । स्वादुः । मित्राय । वरुणाय । वायवे । बृहस्पतये । मधुऽमान् । अदाभ्यः ॥ ६ ॥ १० ॥

पदार्थः—( अदाभ्यः ) अदम्भनीयपरमेश्वर ! ( बृहस्पतये ) वाक्पतये विदुषे (मधुमान्) भवान् मधुरोस्ति । (मित्राय) सुहृदे ( वरुणाय ) वरणीयाय ( वायवे ) ज्ञानयोगिने ( स्वादुः ) स्वादयुतोस्ति । भवान् (दिव्यायजन्मने) पवित्रजन्मने मां(स्वादुः) प्रियतां प्रणीय ( पवस्व ) पवित्रयतु । अथच ( इन्द्राय ) कर्मयोगिने मां ( स्वादुः ) प्रियं विदधातु । तथा ( सुहवीतुनाम्ने ) कर्मयोगिने मां पवित्रयतु ॥

पदार्थ—( अदाभ्यः ) हे अदम्भनीय परमात्मन् ! ( बृहस्पतये ) वाणियोंके पति विद्वान्के लिये आप ( मधुमान् ) मीठे हैं । ( मित्राय ) सर्वमित्र ( वरुणाय ) वरणीय ( वायवे ) ज्ञानयोगीके लिये ( स्वादुः ) सर्वप्रिय बना कर ( पवस्व ) हमको पवित्र करें । और ( इन्द्राय ) कर्म्मयोगीके लिये आप हमको ( स्वादुः ) प्रिय बनायें और ( सुहवीतुनाम्ने ) कर्म्मयोगीके लिये आप हमको पवित्र बनायें ।

भावार्थ—जो पुरुष परमात्माका उपासन करते हैं । उनकी कुटिलतायें ज्ञानयोगसे दग्ध हो जाती हैं । इसलिये वे सर्वप्रिय हो जाते हैं ॥ ६ ॥ १० ॥

अत्यं मृजन्ति कलशे दश क्षिपः<br>
प्र विप्राणां मतयो वाचं ईरते ।<br>
पवमाना अभ्यर्षन्ति सुष्टुतिमेन्द्रं<br>
विशन्ति मदिरास इन्दवः ॥ ७ ॥

अत्यं । मृजंति । कलशे । दश । क्षिपः । प्र । विप्राणां । मतयः । वाचः । ईरते । पवमानाः । अभि । अर्षति । सुऽस्तुतिं । आ । इंद्रं । विशंति । मदिरासः । इंदवः ॥ ७ ॥

पदार्थः—( मदिरास इन्दवः ) आनन्दवर्द्धक ज्ञानप्रकाशकस्वभावा हि ( इन्द्रमाविशन्ति ) कर्मयोगिनं प्राप्नुवन्ति । कथंभूतं कर्मयोगिनं प्राप्नुवन्ति-तथाहि ( सुस्तुतिं ) शोभनस्तुतिकर्तारं । तं कर्मयोगिनं ( पवमानाः ) परमेश्वरस्य पवित्रतरा भावा ( अभ्यर्षन्ति ) प्राप्ताभवन्ति । तस्य ( कलशे ) अन्तःकरणे ( दशक्षिपः ) दशप्राणाः ( अत्यं ) गतिशीलं परमात्मानं ( मृजन्ति ) साक्षात्कुर्वन्ति ( विप्राणां मतयः ) विज्ञानिजनानांबुद्धयः ( वाचईरते ) तस्मिन् परमात्मानि वाण्याः प्रयोगंकुर्वन्ति ।

पदार्थ—( मदिरास इन्दवः ) आनन्दके वर्द्धक और ज्ञानके प्रकाशकस्वभाव ( इंद्रमाविशन्ति ) कर्म्मयोगीको आकर प्राप्त होते हैं । जो कर्म्मयोगी ( सुस्तुतिं ) सुन्दरस्तुति करनेवाला है । उसको ( पवमानः ) परमात्माके पवित्रभाव ( अभ्यर्षन्ति ) प्राप्त होतेहैं । उसको ( कलशे ) अन्तःकरणमें ( दशक्षिपः ) दशप्राण ( अत्यं ) गतिशील परमात्माको ( मृजन्ति ) साक्षात्कार करते हैं । ( विप्राणां मतयः ) विज्ञानी पुरुषोंकी बुद्धियें ( वाच ईरते ) उस परमात्मामें वाणियोंका प्रयोग करतीं हैं ।

भावार्थ—परमात्माकी उपासनासे मनुष्यको सुन्दरशील मिलता है जिस शीलके द्वारा मनुष्य सद्विद्याको प्राप्त होकर ब्रह्मज्ञानका अधिकारी बनता है ॥ ७ ॥

पवमानो अभ्यर्षा सुवीर्यमुर्वीं
गव्यूतिं महि शर्म सप्रथः ।

मार्किर्नो अस्य परिंषूतिरी-
शतेन्दो जयेमत्वया धनंन्धनम् ॥८॥

पवमानः । अभि । अर्ष । सुवीर्यं । उर्वीं । गव्यूतिं । महिं । शर्मं । सऽप्रथः । माकिः । नः । अस्य । परिंसूतिः । ईशत । इंदो इति । जयेम । त्वया । धनंऽधनं ॥ ८॥

पदार्थः—( पवमानः ) सर्वपावकः परमात्मा (सुवीर्यमुर्वी) बलप्रदं विस्तृतमध्वानं ( गव्यूतिं ) इन्द्रियाणां ज्ञानमार्गं दत्वा हे परमात्मन् ! त्वम् ( महि ) महत् ( सप्रथः ) बृहत् (शर्म) सुखं ( अभ्यर्षा ) देहि । ( इन्दो ) सर्वप्रकाशकपरमेश्वर ! परिषूतिरीशत ) कस्यापिद्वेष्टा ( नः ) मां ( माकिः ) माकुरु । अथच ( त्वया ) भवदुत्पादितं ( अस्य ) संसारस्य ( धनंधनं ) सकलमैश्वर्यं ( जयेम ) वयंजयेम ॥ ८ ॥

पदार्थ—( पवमानाः ) हे सबको पवित्र करनेवाले परमात्मन् ! ( सुवीर्यमुर्वी ) वलके देनेवाले विस्तृतमार्गको जो ( गव्यूतिं ) इन्द्रियोंका ज्ञानमार्ग है उसको देकर हे परमात्मन् ! आप ( महि ) महत् ( सप्रथः ) सबप्रकारसे वड़ा ( शर्म्म ) सुख ( अभ्यर्षा ) दें । ( इन्दो ) हे सर्वप्रकाशक परमात्मन् ! ( परिपूतिरीशत ) किसीका द्वेषी ( नः ) हमको ( माकिः ) मत करो । और ( त्वया ) तुम्हारे से उत्पन्न किया हुआ ( धनं धनं ) सबधनको ( जयेम ) हम जीतें ॥

भावार्थ—जिन लोगोंके ऐश्वर्य्यसम्बन्धी इन्द्रिय विशाल होते हैं। वह किसी के साथ द्वेष नहीं करते । और बुद्धिबलसे ही सब ऐश्वर्य्य उनके अधीन हो जाते हैं ॥ ८ ॥

अधि द्यामस्थाद्वृषभो विचक्षणो-
ऽरूरुचद्वि दिवो रोचना कविः ।
राजा पवित्रमत्येति रोरुवद्दिवः
पीयूषं दुहते नृचक्षसः ॥ ९ ॥

अधि । द्यां । अस्थात् । वृषभः । विऽचक्षणः । अरूरुचत् । वि । दिवः । रोचना । कविः । राजा । पवित्रं । अति । एति । रोरुवत् । दिवः । पीयूषं । दुहते । नृऽचक्षसः ॥ ९ ॥

पदार्थः—( कविः ) सर्वज्ञः परमेश्वरः ( दिवोरोचना ) द्युलोकप्रकाशकानि नक्षत्राणि ( अरूरुचत् ) प्रकाशयति स परमात्मा ( विचक्षणः ) विविधपदार्थद्रष्टास्ति । अथच ( वृषभः ) बलवानस्ति । ( अधिद्यामस्थात् ) द्युलोकमाश्रित्य स्थिरोस्ति । ( राजा ) सकलस्यवस्तुनः प्रकाशकोस्ति । अथच (पवित्रमत्येति) महा पवित्रोस्ति । तथा ( रोरुवद्दिवः ) योहि द्युलोकमपिशब्दायमानं करोति । ( पीयूषं ) तममृतमयं परमात्मानं ( नृचक्षसः ) विज्ञानिनोजनाः ( दुहते ) परिपूरयन्ति ॥ ९ ॥

पदार्थ—( कविः ) सर्वज्ञपरमात्मा ( दिवोरोचना ) द्युलोकके प्रकाशकनक्षत्रोंको ( अरूरुचत् ) प्रकाश करता है । वह परमात्मा ( विचक्षणः ) विविधपदार्थों का द्रष्टा है । और ( वृषभः ) बल वाला है । अधिद्यामस्थात् ) द्युलोकको आश्रितकरके स्थिर है । ( राजा ) सबका प्रकाशक है । और ( पवित्रमत्येति ) सर्वोपरि पवित्र है ( रोरुवद्दिवः ) जो द्युलोक को भी शब्दायमान कर रहा है । ( पीयूषं ) उस अमृतमय को ( नृचक्षसः ) विज्ञानी लोग ( दुहते ) परिपूर्ण करते हैं ।

**भावार्थ**—द्युलोक के नक्षत्रादिकोंका प्रकाशक स्वयंप्रकाशपरमात्मा ही है। उसीसे सूर्य्यचन्द्रादिकोंका प्रकाश होताहै। वही स्वतः प्रकाशस्वरूपपरमात्मा ( पीयूषं ) अमृत का धामहै। उसीसे नित्य सुख मुक्तिकी इच्छा करनी चाहिये ॥ ९ ॥

दिवो नाके मधुजिह्वा असश्चतो
वेना दुहन्त्युक्षणं गिरिष्ठाम् ।
अप्सु द्रप्सं वावृधानं समुद्र आ
सिन्धोरूर्मा मधुमन्तं पवित्र आ ॥ १० ॥

दिवः । नाके । मधुऽजिह्वाः । असश्चतः । वेनाः । दुहंति उक्षणं । गिरिऽस्थां । अप्ऽसु । द्रप्सं । ववृधानं । समुद्रे । आ । सिंधोः । ऊर्मा । मधुऽमंतं । पवित्रे । आ ॥ १० ॥

**पदार्थः**—( गिरिष्ठां ) वाण्यादीनां प्रकाशकं ( उक्षणं ) सर्वोपरि बलस्वरूपं परमेश्वरं ( वेनाः ) यज्ञीयाजनाः (दुहन्ति ) पूर्णतया साक्षात्कुर्वन्ति । योहि याज्ञिकोजनः (असश्चतः) कामनास्वसक्तोस्ति । ( मधुजिह्वा ) मधुरभाषिणः ( दिवो नाके ) आध्यात्मिकयज्ञेषु ये स्थिराआसते (पवित्रे) पूतान्तःकरणे ( आ ) आप्नुवन्ति । यः परमेश्वरः ( मधुमन्तं ) आमोदस्वरूपोस्ति । अथच ( समुद्रे ) अन्तरिक्षे ( सिन्धोरूर्मा ) वाष्परूपपरमाणूनां ( वावृधानं ) वर्द्धकोस्ति । तथा यः ( अप्सु ) सर्वरसेषु (द्रप्सं) सर्वोत्कृष्टरसोस्ति ॥ १० ॥

**पदार्थ**—( गिरिष्ठां ) वाण्यादिकोंके प्रकाशक ( उक्षणं ) सर्वो-

परि बलस्वरूपपरमात्माको ( वेनाः ) याज्ञिकलोग ( दुहन्ति ) परिपूर्णरूपसे साक्षात्कार करते हैं। जो याज्ञिक ( असश्चतः ) कामनाओंमें संसक्तनहीं । ( मधुजिह्वा ) मधुरबोलनेवाले ( दिवो नाके ) आध्यात्मिक यज्ञोंमें जो स्थिर हैं। वे ( पवित्रे ) पवित्र अन्तःकरण में ( आ ) आप्नुवन्ति । सब ओरसे प्राप्त होते हैं। जो परमात्मा ( मधुमन्तं ) आनन्दस्वरूप है। और ( समुद्रे ) अन्तरिक्ष में ( सिन्धोरूर्म्मा ) वाष्परूपपरमाणुओं को ( वावृधानं ) जो बढ़ने वाला है । और ( अप्सु द्रप्सं ) जो सब रसोंमें सर्वोपरि रस है ।

**भावार्थ**—याज्ञिकलोग जो नित्य मुक्तिसुखकी इच्छा करते हैं। वे आनन्दमय परमात्मा का अपनें पवित्र अन्तःकरणमें ध्यान करते हैं। जिस प्रकार जलादिंपदार्थों के सूक्ष्मरूप परमाणु इस विस्तृतनभोमण्डल में व्याप्त हो जाते हैं इसी प्रकार परमात्मा के अपहत पापादिधर्म्म उनके रोम २ में व्याप्त होजाते हैं। अर्थात् वे सर्वाङ्ग से पवित्र होकर परमात्मा के भावों को ग्रहण करते हैं ॥ १० ॥

नाके सुपर्णमुपपप्तिवांसं
गिरो वेनानामकृपन्त पूर्वीः ।
शिशुं रिहन्ति मतयः पनिप्नतं
हिरण्ययं शकुनं क्षामणि स्थाम् ॥ ११ ॥

नाके । सुऽपर्णं । उपपप्तिऽवांसं । गिरः वेनानां । अकृपन्त । पूर्वीः शिशुं । रिहंति । मतयः । पनिप्नतं । हिरण्ययं । शकुनं । क्षामणि । स्था ॥ ११ ॥

**पदार्थः**—यः स्वसत्तया विराजमानः, उपदेशकवचोभिः

स्तूयते (वेनानाम्) उपासकानाम् (गिरः) वाण्यः तं परमात्मानम् (उपाकृपन्त) अभिष्टुवन्ति कीदृशं (सुपर्णम्) स्वसत्तया विराजमानम (उपपप्तिवांसम्) शब्दायमानम् (शिशुम्) श्यति सूक्ष्मंकरोति प्रलयकाले चराचरंजगदिति शिशुः। तं शिशुं (मतयः) बुद्धयः (रिहन्ति) प्राप्नुवन्ति (तं कीदृशं हिरण्ययम्) प्रकाशस्वरूपम् (शकुनम्) सर्वशक्तिमन्तम् (क्षामणि, स्थाम्) क्षमायां तिष्ठन्तम्।

पदार्थ—(वेनानां) उपासकलोगों की (पूर्वीः, गिरः) बहुतसी वाणियें (अकृपन्त) उसकी स्तुति करती हैं। जो (नाके) सुख में (सुपर्णम्) अपनी चित्सत्ता से (उपपप्तिवांसम्) शब्दायमान होता है। शिशुम् श्यति सूक्ष्मं करोति प्रलयकाले इति शिशुः परमात्मा, जो प्रलयकाल में सब पदार्थों को सूक्ष्म करे उसका नाम यहां शिशु है। उस परमात्मा को (रिहन्ति) जो प्राप्त होते हैं। (मतयः) सूक्ष्मबुद्धिवाले (पनिप्नतम्) जो शब्दायमान है (हिरण्ययम्) प्रकाशस्वरूप है। और (शकुनम्) शक्नोति सर्वं कर्तुमिति शकुनं, जो सर्वशक्तिमान हो उसका नाम यहां शकुन है। (क्षामणिस्थाम्) जो क्षमा में स्थिर है।

भावार्थ—परमात्मा विद्वानों की वाणी द्वारा मनुष्योंके हृदय में प्रकाशित होता है। इसलिये मनुष्यों को चाहिये कि वे सदोपदेश द्वारा उसका ग्रहण करें॥ ११॥

ऊर्ध्वो गन्धर्वो अधि नाके
अस्थाद्विश्वा रूपा प्रतिचक्षाणो अस्य।
भानुः शुक्रेण शोचिषा
व्यद्यौत्प्रारूरुचद्रोदसी मातरा शुचिः ॥१२॥११॥४॥

ऊर्ध्वः । गंधर्वः । अधि । नाके । अस्थात् । विश्वा । रूपा । प्रतिऽचक्षाणः । अस्य । भानुः । शुक्रेण । शोचिषा । वि । अद्यौत् । प्र । अरूरुचत् । रोदसी इति । मातरा । शुचिः ॥

पदार्थः—( विश्वा, रूपा, प्रति चक्षाणोऽस्य ) अस्यसूर्य्य मण्डलस्यानेकानिरूपाणि प्रख्यापयन् परमात्मा ( अधि, नाके, अस्थात् ) सर्वोपरि सुखे विराजमानोऽस्ति । ( ऊर्ध्वः ) सर्वोपर्य्यस्ति ( शुक्रेण ) निजबलेन अपि च ( शोचिषा ) निजतेजसा ( भानुः ) सूर्य्यमपि ( व्यद्यौत् ) प्रकाशयति । अपि च ( रोदसी, मातरा ) अन्यलोकलोकान्तराणांनिर्माता ( द्यावापृथिव्योः प्रकाशकोऽस्ति ( शुचिः ) पवित्रोस्ति । अपि च ( गन्धर्वः ) सर्वलोक लोकान्तराणामधिष्ठाता अस्ति ।

पदार्थ—( विश्वा, रूपा, प्रतिचक्षाणोऽस्य ) इस सूर्य्यमण्डलकी प्रतिचक्षाण, रूपा नाना प्रकारके रूपोंको प्रख्यात करता हुआ परमात्मा ( अधि, नाके, अस्थात् ) सर्वोपरि सुखमें विराजमान है। ( ऊर्ध्वः ) सर्वोपरिहै। और ( शुक्रेण ) अपने बलसे और ( शोचिषा ) अपनी दीप्तिसे ( भानुः ) सूर्य्यको भी ( व्यद्यौत् ) प्रकाशित करता है । और ( रोदसी मातरा ) अन्य लोकलोकान्तरोंका निर्माण कर्ता हुआ द्यावा पृथिवीको ( प्रारूरुचत् ) प्रकाशित करने वाला है । ( शुचिः ) पवित्र है । और ( गन्धर्वः ) सर्वलोकलोकान्तरों का अधिष्ठाता है ।

भावार्थ—परमात्मा अपने प्रकाश से सूर्य्यचन्द्रादिकों का प्रकाशक है । और सम्पूर्ण विश्वका निर्माता विधाता और अधिष्ठाता है, उसीकी उपासना सबलोगों को करनी चाहिये ॥ १२ ॥

इति पञ्चाशीतितमं सूक्तं एकादशो वर्गश्च समाप्तः ॥

अथाष्टचत्वारिंशदृचस्य षडशीतितमस्य सूक्तस्य

ऋषिः—१-१० आकृष्टामाषाः । ११-२० सिकता निवावरी । २१-३० पृश्नयोऽजाः । ३१-४० त्रय ऋषिगणाः । ४१-४५ अत्रिः । ४६-४८ गृत्समदः ॥ पवमानः सोमो देवता ॥ छन्दः—१, ६, २१, २६, ३३, ४०, जगती । २, ७, ८, ११, १२, १७, २०, २३, ३०, ३१. ३४, ३५, ३६, ३८, ३९, ४२, ४४, ४७, विराड्जगती । ३-५, ९, १०, १३, १६, १८, १९, २२, २५, २७, ३२, ३७, ४१, ४६, निचृ-ज्जगती । १४, १५, २८, २९, ४३, ४८, पादनिचृज्जगती । २४ आर्चीजगती । ४५ आर्चीस्वराड्जगती ॥ निषादः स्वरः ॥

प्र त आशवः पवमान धीजवो मदा
अर्षन्ति रघुजा इव त्मना ।
दिव्याः सुपर्णा मधुमन्त इन्दवो
मदिन्तमासः परि कोशमासते ॥ १ ॥

प्र । ते । आशवः । पवमान । धीऽजवः । मदाः । अर्षति । रघुजाःऽइव । त्मना । दिव्याः । सुऽपर्णाः । मधुऽमंतः । इंदवः । मदिन्ऽतमासः । परि । कोशं । आसते ।

पदार्थः—( पवमान ) हे सर्वपवित्रकारक परमात्मन् !

( ते ) तव ( धीजवः ) ज्ञानस्य ( आशवः ) ज्ञानेन्द्रियरूपाः भावाः ( रघुजाइव, त्मना ) विद्युदिव शीघ्रगतिकारकाः ( मदाः ) अपिच आनन्दरूपाः ( प्रार्षन्ति ) अनायासेन प्रत्यहं गच्छन्ति। अपि च ते भावाः ( दिव्याः ) दिव्याः ( सुपर्णाः ) चेतनरूपाः ( मधुमन्तः ) आनन्दरूपाः ( इन्दवः ) प्रकाशरूपाः सन्ति। ( मन्दिन्तमासः ) आह्लादकाः सन्ति। ते उपासकस्य ( कोशम् ) अन्तःकरणे ( पर्य्यासते ) स्थिरा भवन्ति।

पदार्थ—( पवमान ) हे सबको पवित्र करनेवाले परमात्मन् ( ते ) तुम्हारे ( धीजवः ) ज्ञानके ( आशवः ) प्राणरूपभाव ( रघुजाइवत्मना ) विद्युत्के समान शीघ्रगति करनेवाले ( मदाः ) और आनन्दरूप ( प्रार्षन्ति ) अनायाससे प्रतिदिन गति कर रहे हैं। और वे भाव ( दिव्याः ) दिव्य हैं ( सुपर्णाः ) चेतनरूप हैं ( मधुमन्तः ) आनन्दरूप हैं ( इन्दवः ) प्रकाशरूप हैं। ( मन्दिन्तमासः ) आह्लादक हैं। वे उपासकके ( कोशं ) अन्तःकरणमें ( पर्य्यासते ) स्थिर होते हैं।

भावार्थ—जो लोग पदार्थान्तरों से चित्तवृत्तिको हटाकर एकमात्र परमात्माका ध्यान करते हैं उनके अन्तःकरणको प्रकाशित करने के लिये परमात्मा दिव्यभावसे आकर उपस्थित हो जाते हैं॥ १॥

प्र ते मदा॑सो म॒दिरा॑स आ॒शवो॑
ऽसृ॑क्षत र॒थ्या॑सो य॒था पृथ॑क्।
धे॒नुर्न व॒त्सं पय॑सा॒भि व॒ज्रिण॑-
मिन्द्र॒मिन्द॑वो॒ मधु॑मन्त ऊ॒र्मयः॑॥ २॥

प्र। ते॒। मदा॑सः। म॒दिरा॑सः। आ॒शवः॑। असृ॑क्षत। र॒थ्या॑सः। य॒था। पृथ॑क्। धे॒नुः। न। व॒त्सं। पय॑सा। अ॒भि।

व॒ज्रिणं॑ । इंद्रं॑ । इंद॑वः । मधु॑ऽमंतः । ऊ॒र्मयः॑ ॥ २ ॥

पदार्थः—( वज्रिणम्, इन्द्रम् ) विद्युच्छक्तिधारकाय-कर्म्मयोगिने ( धेनुः ) गौः ( न ) यथा ( वत्सम् ) निजपुत्रकम्-( पयसा ) दुग्धेन (अभिगच्छति ) प्राप्नोति, एवमेव ( इन्दवः ) परमात्मनः प्रकाशरूपस्वभावाः ( मधुमन्तः ) ये आनन्दमयाः ( ऊर्मयः ) अपि च समुद्रस्य तरङ्गा इव गतिशीलाः सन्ति । ते ( मदासः ) आह्लादकाय ( मदिरासः ) उत्तेजकाय ( आशवः ) व्याप्तिशीलस्वभावाय ( ते ) तुभ्यम् ( प्रासृक्षत ) विरचिताः ( यथा ) येन प्रकारेण (रथ्यासः) रथगत्यै अश्वादयः ( पृथक् ) भिन्नाः २ विरचितास्तथैव ( ते ) तुभ्यं हे उपासक उक्तस्वभावा रचिताः ।

पदार्थ—( वज्रिणम्, इन्द्रम् ) विद्युत्की शक्ति रखनेवाले कर्म्म-योगीके लिये ( धेनुः ) गौ ( न ) जैसे ( वत्सं ) अपने बच्चेको ( पयसा ) दुग्धके द्वारा ( अभिगच्छति ) प्राप्त होती है । इसी प्रकार ( इन्दवः ) परमात्माके प्रकाशरूपस्वभाव ( मधुमन्तः ) जो आनन्दमय हैं । ( ऊर्म्मयः ) और समुद्रकी लहरोंके समान गतिशील हैं । वे (मदासः) आह्लादक (मदिरासः) उत्तेजक ( आशवः ) व्याप्तिशीलस्वभाव ( ते ) तुम्हारे लिये ( प्रासृक्षत ) रचेगये हैं । ( यथा ) जैसे ( रथ्यासः ) रथकी गतिके लिये अश्वादिक ( पृथक् ) भिन्न २ रचे गये हैं इसी प्रकार ( ते ) तुम्हारे लिये हे उपासक उक्त स्वभाव रचे गये हैं ।

भावार्थ—परमात्मा उपदेश करते हैं कि हे उपासक ! तुम्हारे शरीररूपी रथके लिये ज्ञानके विचित्र भाव घोड़ोंके समान जिसप्रकार घोड़े रथको गतिशील बनाते हैं । इसीप्रकार विज्ञानी पुरुषकी चित्तवृत्तियें उसके शरीरको गतिशील बनाती हैं ॥ २ ॥

अत्यो न हियानो अभि वाजमर्ष
स्वर्वित्कोशं दिवो अद्रिमातरम् ।
वृषा पवित्रे अधि सानो अव्यये
सोमः पुनान इन्द्रियाय धायसे ॥ ३ ॥

अत्यः । न । हियानः । अभि । वाजं । अर्ष । स्वःऽवित् । कोशं । दिवः । अद्रिऽमातरं । वृषा । पवित्रे । अधि । सानौ । अव्यये । सोमः । पुनानः । इन्द्रियाय । धायसे ॥ ३ ॥

पदार्थः—( सोमः ) हे परमात्मन् ! ( पुनानः ) सर्वं पवित्रयन् ( इन्द्रियाय धायसे ) धनधारणाय ( अव्यये ) अविनाशिने ( पवित्रे ) पवित्रात्मनि ( अधिसानौ ) यः सर्वोपरि विराजमानोऽस्ति । एवंविधपवित्रात्मने ( वृषा ) सर्वकामान् वर्षकः परमात्मा ( स्वर्वित ) यः सर्वज्ञोऽस्ति ।( अत्यः ) गतिशीलपदार्थस्य ( न ) समानः ( हियानः ) प्रेरकः परमात्मा ( वाजम् ) यज्ञस्य ( अभि ) सम्मुखे ( अर्ष ) गच्छति । ( दिवो, अद्रिमातरम् ) द्युलोकान्मेघस्य निर्माता ( कोशम् ) निधानमुत्पादयति ।

पदार्थ—( सोमः ) परमात्मा ( पुनानः ) सबको पवित्र करता हुआ ( इन्द्रियायधायसे ) धनके धारण कराने के लिये ( अव्यये ) अविनाशी ( पवित्रे ) पवित्र आत्मामें ( अधिसानौ ) जो सर्वोपरि विराजमान है ऐसे पवित्र आत्माके लिये (वृषा) सब कामनाओंकी वृष्टिकर्ता परमात्मा ( स्वर्वित ) जो सर्वज्ञ है ( अत्यः ) गतिशील पदार्थके ( न ) समान ( हियानः )

प्रेरणा करनेवाला परमात्मा ( वाजम् ) यज्ञके (अभि) सम्मुख ( अर्ष ) गति करता है ( दिवो, अद्रिमातरम् ) द्युलोकसे मेघका निर्म्माता ( कोशम् ) निधिको उत्पन्न करता है ।

**भावार्थ**—परमात्मा विद्युदादि पदार्थों के समान गतिशील है । और प्रकाशमात्रके आधार निधियोंका निर्म्माता है । वही परमात्मा पवित्र अन्तःकरणवाले पुरुषको ऐश्वर्य्यसम्पन्न करता है ॥ ३ ॥

प्र त आश्विनीः पवमान धीजुवो
दिव्या असृग्रन्पयसा धरीमणि ।
प्रान्तर्ऋषयः स्थाविरीरसृक्षत ये
त्वा मृजन्त्यृषिषाण वेधसः ॥ ४ ॥

प्र । ते । आश्विनीः । पवमान । धीऽजुवः । दिव्याः । असृग्रन् । पयसा । धरीमणि । प्र । अंतः । ऋषयः । स्थाविरीः । असृक्षत । ये । त्वा । मृजंति । ऋषिऽसान । वेधसः ।

**पदार्थः**—( पवमान ) हे परमात्मन् ! ( ते ) तव (आश्विनीः ) व्याप्तयः ( धीजुवः ) या मनोवेगसमानगतिशीलाः ( दिव्याः ) अपि च दिव्यरूपाः सन्ति ( धरीमणि ) भवद्धारके अन्तःकरणे ( पयसा, प्रासृग्रन् ) अमृतं वाहयन्त्यो गच्छन्ति । ( वेधसः ) कर्म्मविधातारः ( ऋषिषाण ) ज्ञानिनः ( ये ) ये ( त्वा ) त्वाम् ( मृजन्ति ) तत्वमिथ्यात्वे विविच्य जानन्ति । ते ऋषयः ( स्थाविरीः ) सर्वकामान् वर्षकं भवन्तम् ( अन्तः ) अन्तःकरणे ( प्रासृक्षत ) ध्यानविषयं विदधति ।

पदार्थ—( पवमान ) हे परमात्मन् ( ते ) तुम्हारी ( आश्विनीः ) व्याप्तियें ( धीजुवः ) जो मनके वेगके समान गतिशील और ( दिव्याः ) दिव्यरूप हैं । ( धरीमणि ) आपको धारणकरनेवाले अन्तःकरणमें ( पयसासृग्रन् ) अमृतको बहाती हुई गमन करती हैं । ( वेधसः ) कर्म्मोंका विधान करनेवाले ( ऋषिषाण ) ज्ञानी ( ये ) जो ( त्वा ) तुमको (मृजन्ति ) विवेक करके जानते हैं । वे ऋषि ( स्थाविरी ) सब कामनाओंकी वृष्टि करनेवाले आपको ( अन्तः ) अन्तःकरणमें ( प्रासृक्षत ) ध्यानका विषय बनाते हैं ।

भावार्थ—जो लोग दृढ़तासे ईश्वरकी उपासना करते हैं । परमात्मा उनके ध्यानका विषय अवश्यमेव होता है । अर्थात् जब तक पुरुष सब ओरसे अपनी चित्तवृत्तियोंको हटाकर एकमात्र ईश्वरपरायण नहीं होता तब तक वह सूक्ष्मसे सूक्ष्म परमात्मा उसकी बुद्धिका विषय कदापि नहीं होता । इसी अभिप्रायसे कहा है कि 'दृश्यते त्वग्रया बुद्ध्या सूक्ष्मया सूक्ष्मदर्शिभिः' वह सूक्ष्मदर्शियोंकी सूक्ष्म बुद्धिद्वारा ही देखाजाता है अन्यथा नहीं ॥ ४ ॥

विश्वा धामानि विश्वचक्ष ऋभ्वसः
प्रभोस्ते सतः परि यन्ति केतवः ।
व्यानशिः पवसे सोमधर्मभिः
पतिर्विश्वस्य भुवनस्य राजसि ॥ ५ ॥ १२ ॥

विश्वा । धामानि । विश्वऽचक्षः । ऋभ्वसः । प्रऽभोः । ते । सतः । परि । यंति । केतवः । विऽआनशिः । पवसे । सोम । धर्मऽभिः । पतिः । विश्वस्य । भुवनस्य । राजसि ॥

पदार्थः—( सोम ) हे परमात्मन् ! त्वं (विश्वस्य भुवनस्य)

सर्वभुवनानाम् ( पतिः ) स्वामी असि । अपि च ( धर्मभिः ) नित्यादिधर्म्मैः ( राजसि ) विराजमानो भवसि ( व्यानशिः ) अपि च सर्वत्र व्यापको भूत्वा ( पवसे ) सर्वं पवित्रयासि ( विश्व चक्षःप्रभोः ) हे सर्वज्ञ जगत्स्वामिन् ! ( ते ) तव ( ऋभ्वसः ) महत्यः ( केतवः ) शक्तयः ( परियन्ति ) सर्वत्र विद्यन्ते । अपि च ( ते, सतः ) तव सत्तायाः । विश्वाधामानि ) अखिल-लोकलोकान्तराणि उत्पद्यन्ते ।

पदार्थ—( सोम ) हे परमात्मन् ! आप ( विश्वस्य भुवनस्य ) सम्पूर्ण भुवनोंके ( पतिः ) स्वामी हैं । और ( धर्मभिः ) अपने नित्य शुद्ध बुद्ध मुक्त स्वभावादि धर्म्मोंके द्वारा (राजसि) विराजमान है । (व्यानशिः) और सर्वत्र व्यापक होकर ( पवसे ) सबको पवित्र करते हो ( विश्वचक्षः-प्रभोः ) हे सर्वज्ञ जगत्स्वामिन् ! ( ते ) तुम्हारी ( ऋभ्वसः ) बड़ी ( केतवः ) शक्तियें ( परियन्ति ) सर्वत्र विद्यमान हैं । और ( ते सतः ) तुम्हारी सत्ता से ( विश्वाधामानि ) सम्पूर्ण लोकलोकान्तर उत्पन्न होते हैं ।

भावार्थ—जो यह संसार के पति हैं, वह अपहत पाप्मादि धर्म्मोंसे सर्वत्र परिपूर्ण हो रहा है । सायणादिभाष्यकार 'धर्म्मभिः' के अर्थ भी सोमके वहनेके करते हैं यदि कोई इनसे पूछे कि, अस्तु धर्म्मके अर्थ वहन ही सही पर पतिर्विश्वस्य भुवनस्य इस वाक्यके अर्थ जड़सोममें कैसे संगत होते हैं । क्योंकि एक लताविशेषवस्तु सम्पूर्ण लोकलोकान्तरोंके पति कैसे हो सकती है । वास्तवमें बात यह है कि मन्त्रोंके आध्यात्मिक अर्थोंको छोड़कर इनको केवल भौतिक अर्थ ही प्रिय लगते हैं ॥ ५ ॥ १२ ॥

उभयतः पवमानस्य रश्मयो
ध्रुवस्य सतः परि यन्ति केतवः ।

यदीं पवित्रे अधि मृज्यते हरिः
सत्ता नि योना कलशेषु सीदति ॥ ६ ॥

उभयतः । पवमानस्य । रश्मयः । ध्रुवस्य । सतः । परि । यंति । केतवः । यदि । पवित्रे । अधि । मृज्यते । हरिः । सत्ता । नि । योना । कलशेषु । सीदति ॥

**पदार्थः**—( ध्रुवस्य ) अस्य ध्रुवरूपपरमात्मनः कथम्भूतस्य तस्य ( सतः ) सर्वत्र विद्यमानस्य पुनः कथम्भूतस्य ( पवमानस्य ) सर्वं पूयमानस्य । एवम्भूतस्य ( रश्मयः ) तेजांसि ( उभयतः ) इतश्चामुतश्च ( परियन्ति ) परिगच्छन्ति तानि तेजांसि ( केतवः ) सर्वोत्कृष्टत्वेन केतुतुल्यानि सन्ति । (यदि) यदा (पवित्रे) पूतान्तःकरणे (हरिः) परमात्मा ( अधिमृज्यते ) साक्षात्क्रियते । तदा (सत्ता) तस्य सत्ता (नि) सततम् ( कलशेषु, योना) अन्तःकरणस्थानेषु ( सीदति ) विराजते ।

**पदार्थ**—( ध्रुवस्य ) इस ध्रुव परमात्माको ( सतः ) जो सर्वत्र विद्यमान है और ( पवमानस्य ) जोकि सबको पवित्र करने वाला है । उसको ( रश्मयः ) ज्योतियें ( उभयतः ) दोनों लोकोंमें ( परियन्ति ) प्राप्त होती हैं । वे ज्योतियें ( केतवः ) सर्वोपरि होनेसे केतुके समान हैं । (यदि) जब ( पवित्रे ) पवित्र अन्तःकरणमें ( हरिः ) परमात्मा ( अधिमृज्यते ) साक्षात्कार कियाजाता है । तब ( सत्ता ) उसकी सत्ता ( नि ) निरन्तर ( कलशेषु योना ) अन्तःकरणस्थानोंमें ( सीदति ) विराजमान होती है ।

**भावार्थ**—जो पुरुष अपने अन्तःकरणोंको सत्कर्म्मद्वारा शुद्ध बनाते हैं । उन्हींके अन्तःकरणोंमें परमात्मा प्रतिबिम्बित होता है । अन्योंके नहीं ।

यज्ञस्य केतुः पवते स्वध्वरः सोमो
देवानामुप याति निष्कृतम् ।
सहस्रधारः परि कोशमर्षति वृषा
पवित्रमत्येति रोरुवत् ॥ ७ ॥

यज्ञस्य । केतुः । पवते । सुऽअध्वरः । सोमः । देवानां । उप ॥
याति । निःऽकृतं । सहस्रऽधारः । परि । कोशं । अर्षति
वृषा । पवित्रं । अति । एति । रोरुवत् ॥

पदार्थः—( यज्ञस्य, केतुः ) परमात्मा ज्ञानयज्ञादिनां प्रज्ञापकोऽस्ति । ( पवते ) सर्वंपुनाति अपि च (स्वध्वरः) शोभनं यज्ञकर्ता अस्ति । ( सोमः ) सोमस्वभावपरमात्मा ( देवानाम् ) विदुषाम् ( निष्कृतम् ) संस्कृतान्यन्तःकरणानि प्राप्नोति । किम्भूतः परमात्मा ( सहस्रधारः ) अनन्तशक्तिसम्पन्नः (कोशम्) ज्ञानिपुरुषस्यान्तःकरणम् ( पर्य्यर्षति ) प्राप्नोति । स परमात्मा ( पवित्रम् ) प्रत्येकपवित्रताम् ( अत्येति ) अतिक्रामति अर्थात् सर्वोपरि पवित्रोऽस्ति । किम्भूतः परमात्मा (वृषा) बलरूपः पुनः किम्भूतः (रोरुवत्) सर्वत्र शब्दायमानोऽस्ति ।

पदार्थ—( यज्ञस्य केतुः ) ज्ञानयज्ञ, कर्म्मयज्ञ, ध्यानयज्ञ, योगयज्ञ, इत्यादि यज्ञोंका परमात्मा केतु है । ( पवते ) सबको पवित्र करनेवाला है । और ( स्वध्वरः ) अहिंसाप्रधान यज्ञोंवाला है । ( सोमः ) वह सोमस्वभाव परमात्मा ( देवानां ) विद्वानों के ( निष्कृतम् ) संस्कृत अन्तःकरणोंको प्राप्त होता है । ( सहस्रधारः ) अनन्तशक्तिसम्पन्न है । और ( कोशम् ) ज्ञानी-

पुरुषके अन्तःकरणको (पर्य्यर्षति) प्राप्त होता है। वह परमात्मा (पवित्रं) प्रत्येक-पवित्रताको (अत्येति) अतिक्रमण करता है। अर्थात् सर्वोपरि पवित्र है। (वृषा) वह बलस्वरूप है। और (रोरुवत्) सर्वत्र शब्दायमान है।

**भावार्थ**—परमात्मा अपनी अनन्तशक्तिसे सर्वत्रविराजमान है, यद्यपि वह सर्वत्रविद्यमान है तथापि उसकी अभिव्यक्ति विद्वानोंके अन्तःकरणमें ही होती है। अन्यत्र नहीं ॥ ७ ॥

> राजा समुद्रं नद्यो३वि गाहते-
> ऽपामूर्मिं सचते सिन्धुषु श्रितः।
> अध्यस्थात्सानु पवमानो अव्ययं
> नाभा पृथिव्या धरुणो महो दिवः ॥ ८ ॥

राजा। समुद्रं। नद्यः। वि। गाहते। अपां। ऊर्मिं। सचते। सिंधुषु। श्रितः। अधि। अस्थात्। सानु। पवमानः। अव्ययं। नाभा। पृथिव्याः। धरुणः। महः। दिवः।

**पदार्थः**—यः परमात्मा (पृथिव्याः) पृथिवीलोकस्य अपि च (महोदिवः) अस्य महतो द्युलोकस्य (धरुणः) आधारोऽस्ति। (पवमानः) सर्वपवित्रयन् परमात्मा (नद्यः) सर्वाः समृद्धिः अपि च (अव्ययम्, समुद्रम्) आविनाशिमन्तरिक्षम् (विगाहते) विगाहनं करोति (अपामूर्मिम्) जलतरङ्गरूपनदीः (सिन्धुषु) महासागरेषु (सचते) सङ्गताः करोति (श्रितः) स सर्वस्याश्रयोभूत्वा (अध्यस्थात्) विराजते। अपिच (सानुनाभा) अत्युच्चशिखराणामपि मध्ये विराजते।

**पदार्थ**—जो परमात्मा (पृथिव्याः) पृथिवीलोक और (महो-

दिवः ) इस बड़ेद्युलोकका ( धरुणः ) आधार है । ( पवमानः ) सबको पवित्र करनेवाला परमात्मा ( नद्यः ) सब समृद्धिओंको और ( अव्ययं-समुद्रम् ) इस अविनाशी अन्तरिक्षको ( विगाहते ) विगाहन करता है । ( अपामूर्मिम् ) जलकीलहरेंरूपनादियोंको ( सिन्धुषु ) महासागरोंमें ( सचते ) संगत करता है । ( श्रितः ) वह सबका आश्रयहोकर ( अध्यस्थात् ) विराजमान हो रहा है । और ( सानुनाभा ) उच्चसे उच्च शिखरोंके मध्यमें भी विराजमान है ।

भावार्थ—यद्यपि स्थूलदृष्टिसे यह पृथिव्यादिलोक अन्यपदार्थोंके अधिष्ठान प्रतीत होते हैं तथापि सर्वाधिकर्म्म एकमात्र परमात्मा ही है क्योंकि सब लोकलोकान्तरोंकीरचना करनेवाला और नदियोंको सागरोंके साथ संगत करनेवाला और ग्रह उपग्रहोंको सूर्य्यादि बड़ी २ ज्योतियोंमें संगत करनेवाला एकमात्र परमात्माही सबका अधिष्ठान है कोई अन्यवस्तु नहीं ॥८॥

दिवो न सानु स्तनयन्नचिक्रदद्यौश्च
यस्य पृथिवी च धर्मऽभिः ।
इन्द्रस्य सख्यं पवते विवेवि-
दत्सोमः पुनानः कलशेषु सीदति ॥ ९ ॥

दिवः । न । सानु । स्तनयन् । अचिक्रदत् । द्यौः । च । यस्य । । पृथिवी । च । धर्मऽभिः । इंद्रस्य । सख्यं । पवते विऽवेविदत् । सोमः । पुनानः । कलशेषु । सीदति ॥

पदार्थः—यः परमात्मा ( दिवः, सानु ) द्युलोकस्योच्च-शिखराणि ( स्तनयन् ) विस्तारयन् ( न ) इव ( अचिक्रदत् ) गर्जति । (च) पुनः ( यस्य धर्म्मभिः ) यत्पुण्यैः (द्यौः) द्युलोकः,

अपिच ( पृथिवी ) पृथिवीलोकस्तिष्ठति । स परमात्मा (इन्द्रस्य) कर्म्मयोगिनः ( सख्यम् ) मित्रताम् ( पवते ) पवित्रयति । तथा ( विवेविदत् ) प्रसिद्धयति । सः ( सोमः ) परमात्मा (पुनानः) मां पवित्रयन् ( कलशेषु ) मदन्तःकरणेषु (सीदति) विराजते ।

**पदार्थ**—जो परमात्मा ( दिवःसानु ) द्युलोकके उच्चशिखरको ( स्तनयन् ) विस्तारकरनेकी ( न ) नाईं ( अचिक्रदत् ) गर्जरहा है । ( च ) और ( यस्य धर्मभिः ) जिसके धर्मोंसे ( द्यौः ) द्युलोक और पृथ्वी पृथ्वीलोक स्थिर है, वह परमात्मा ( इन्द्रस्य ) कर्मयोगीके ( सख्यं ) मैत्रीभावको ( पवते ) पवित्र करता है तथा ( विवेविदत् ) प्रसिद्ध करता-है । वह ( सोमः ) परमात्मा ( पुनानः) हमको पवित्र करता हुआ (कलशेषु) हमारे अन्तःकरणों में ( सीदति ) विराजमान होता है ॥

**भावार्थ**—इस मन्त्रमें परमात्माने इस बातका निरूपण किया है कि द्युलोक औ पृथ्वी-लोक किसी चेतन वस्तु के सहारेसे स्थिर हैं । और उस चेतन में भी जगत्कर्तृत्वादि-धर्मोंसे इनको धारण किया है । वेदमें इतना स्पष्टईश्वरवाद होनेपर भी सायणादि-भाष्यकार इन मन्त्रोंको जड-सोमलतामें लगाते हैं और ऐसे मिथ्या अर्थ करना ब्राह्मण और उपनिषदोंसे सर्वथा विरुद्ध है । देखो "साच प्रशासनात्" १।३।११ इस सूत्र में महर्षिव्यासने " शतपथ " ब्राह्मण के आधार पर यह लिखा है, कि एतस्य वा अक्षरस्य वा गार्गि ! द्यावापृथिव्यौ विधृते तिष्ठतः बृ. ३। ८।९। इस अक्षरकी आज्ञा में हे गार्गि ! द्यु-लोक और पृथ्वी लोक स्थिर-है । इससे स्पष्टसिद्ध है यहां ईश्वरका वर्णन है जड सोमका नहीं ॥ ९ ॥

ज्योतिर्यज्ञस्य पवते मधु प्रियं
पिता देवानां जनिता विभूवसुः ।

दधाति रत्नं स्वधयोरपीच्यं मदिन्तमो
मत्सर इन्द्रियो रसः ॥ १० ॥ १३ ॥

ज्योतिः । यज्ञस्य । पवते । मधु । प्रियं । पिता देवानां । जनिता । विभुऽवसुः । दधाति । रत्नं । स्वधोयोः अपीच्यं । मदिन्ऽतमः । मत्सरः । इन्द्रियः । रसः ॥

पदार्थः——स परमात्मा ( यज्ञस्य ) अध्वरस्य ( ज्योतिः ) तेजोऽस्ति । अपिच ( मधु ) आनन्दरूपोऽस्ति ( प्रियं पवते ) यस्तस्य प्रियङ्करोति तं पवित्रयति। ( देवानाम् ) सर्वलोकलोकान्तराणाम् ( पिता ) रक्षकः । अपिच ( जनिता ) जनकः ( विभुवसुः ) अपिचात्यन्तैश्वर्य्यवान्अस्ति । ( स्वध्वयोरपीच्यम् ) तथा द्यावापृथिव्योरन्तर्गतम् ( रत्नम् ) मणिम् ( दधाति ) धारणङ्करोति । अपिच स परमात्मा ( मदिन्तमः ) आनन्दरूपोऽस्ति । तथा ( मत्सरः ) सर्वानन्ददायकः । अपिच ( इन्द्रियः ) ऐश्वर्य्यवान् तथा ( रसः ) आनन्दस्वरूपोऽस्ति ।

पदार्थ——वह परमात्मा ( यज्ञस्य ) यज्ञकी ( ज्योतिः ) ज्योति है । और ( मधु ) आनन्दरूप है । प्रियं पवते ) जो उससे प्रेम करते हैं उन्हें पवित्र करता है । ( देवानां ) सबलोक-लोकान्तरोंका ( पिता ) पालन करनेवाला और ( जनिता ) उत्पन्नकरनेवाला है । ( विभूवसुः ) और अत्यन्त ऐश्वर्यवाला है । ( स्वधयोरपीच्यं ) तथा द्यावा-पृथिवी के अन्तर्गत ( रत्नं ) रत्नोंको ( दधाति ) धारणकरता है । और वह परमात्मा ( मदिन्तमः ) आनन्दस्वरूप है । तथा ( मत्सरः ) सबको आनन्द देने वाला है । और ( इन्द्रियः ) ऐश्वर्य युक्त है तथा (रसः) आनन्दस्वरूप है ।

भावार्थ—इस मन्त्र में परमात्मा को नानाविध रत्नों का धाता विधाता, और निर्माता, कथन किया है । अर्थात वही सृष्टि का धारणकरने-वाला है, वही पालनकरने वाला है और वही प्रलयकरने वाला है । इस मन्त्र में "मत्सर" और मदादिक जो नाम आये हैं वे परमात्मा के गौरव-को कथन करते हैं आधुनिक संस्कृत में मद मत्सरादिनाम बुरे अर्थों में आने लगे हैं वेद में इनके ये अर्थ न थे । इससे स्पष्ट सिद्ध होता है, कि आधु-निकसंस्कृत और वैदिकसंस्कृत में बड़ा प्रभेद है ॥ १० ॥ १३ ॥

अभिक्रन्दन्कलशं वाज्यर्षति
पतिर्दिवः शतधारो विचक्षणः ।
हरिर्मित्रस्य सदनेषु सीदति
मर्मृजानोऽविभिः सिन्धुभिर्वृषा ॥ ११ ॥

अभिऽक्रंदन् । कलशं । वाजी । अर्षति । पतिः । दिवः । शतऽधारः । विऽचक्षणः । हरिः । मित्रस्य । सदनेषु । सी-दति । मर्मृजानः । अविंऽभिः । सिंधुऽभिः । वृषा ।

पदार्थः—( अभिक्रन्दन् ) स्वसत्तयागर्जन् ( कलशम् ) अस्मै ब्रह्माडांय ( वाज्यर्षति ) बलपूर्वकं गतिं ददाति । अन्यच्च ( दिवः ) द्युलोकस्य ( पतिः ) रक्षकः तथा ( शतधारः ) अनेकानन्दानां स्त्रोतस्तथा ( विचक्षणः ) सर्वद्रष्टा अपिच (हरिः) सर्वशक्तीनां स्वाधीनकारकोऽस्ति । अपरञ्च ( मित्रस्य ) प्रेम-पात्राणाम् ( सदनेषु ) अन्तःकरणेषु ( सीदति ) विराजते । तथा ( मर्मृजानः ) सर्वपरिशोधयन् ( अविंभिः, सिन्धुभिः ) स कृपासागरः ( वृषा ) निजकृपावृष्टिभिः सर्वं सिञ्चन्ति ।

**पदार्थ**—( अभिक्रन्दन् ) स्वसत्ता से गर्जता हुआ ( कलशं ) इस ब्रह्माण्ड को ( वाज्यर्षति ) बलपूर्वक गति देनेवाला है । और ( दिवः ) द्युलोकका ( पतिः ) स्वामी है । तथा ( शतधारः ) अनन्तप्रकारके आनन्दोंका स्रोत है । तथा ( विचक्षणः ) सर्वद्रष्टा । और ( हरिः ) सब शक्तियोंको स्वाधीन रखनेवाला है । और ( मित्रस्य ) प्रेमपात्रलोगोंके ( सदनेषु ) अन्तःकरणोंमें ( सीदति ) विराजमान होता है । तथा ( मर्मृजानः ) सबको शुद्ध करता हुआ ( अविभिः, सिन्धुभिः ) वह कृपासिन्धु ( वृषा ) अपनी कृपारूप वृष्टिसे सबको सिञ्चित करता है ।

**भावार्थ**—उपासकोंको चाहिये कि अपने मनोरूप मन्दिरको इस प्रकारसे मार्जित करें जिससे परमात्माका निवास-स्थान बनकर मन उनकी उपासनाका मुख्य साधन बने ॥ ११ ॥

अग्रे सिन्धूनां पवमानो अर्षत्यग्रे<br>
वाचो अग्रियो गोषु गच्छति ।<br>
अग्रे वाजस्य भजते महाधनं<br>
स्वायुधः सोतृभिः पूयते वृषा ॥ १२ ॥

अग्रे । सिंधूनां । पवमानः । अर्षति । अग्रे । वाचः । अग्रियः । गोषु । गच्छति । अग्रे । वाजस्य । भजते । महाऽधनं । सुऽआयुधः । सोतृऽभिः । पूयते । वृषा ॥

**पदार्थः**—यः परमात्मा ( वाचोऽग्रियः ) वेदवाणीनां प्रधानकारणमस्ति । अन्यच्च ( गोषु ) स्वसत्तया लोकलोकान्तरेषु ( गच्छति ) प्राप्नोति । ( सिन्धूनाम् ) प्रकृते वाष्परूपावस्थया ( अग्रे ) प्रथमम् ( पवमानः ) पवित्रयन् ( अर्षति ) सर्वत्र

प्राप्नोति । एवम्भूतस्य परयात्मन उपासकः ( वाजस्याग्रे ) धनाद्यैश्वर्य्यैः प्रथमम् ( महाधनम् ) महाधन परमात्मानम् ( भजते ) सेवते । एवम्भूतमुपासकम् ( स्वायुधः ) अनन्तशक्ति सम्पन्नः ( सोतृभिः ) स्वसंस्कारकशक्तिभिः ( वृषा ) बलस्वरूप परमात्मा ( पूयते ) पवित्रयति ।

**पदार्थ**—जो परमात्मा ( वाचोऽग्रियः ) वेदरूपी वाणियोंका मुख्यकारण है । और ( गोषु ) अपनी सत्तासे लोक-लोकान्तरोंमें ( गच्छति ) प्राप्त है । ( सिन्धूनां ) प्रकृतिकी वाष्परूपअवस्थासे ( अग्रे ) पहले ( पवमानः ) पवित्र करता हुआ ( अर्षति ) सर्वत्र प्राप्त है । ऐसे परमात्माको उपासक ( वाजस्याग्रे ) धनादि ऐश्वर्योंसे पहले ( महाधनं ) महाधनरूप उक्त परमात्माको ( भजते ) सेवन करता है । ऐसे उपासक को ( स्वायुधः ) अनन्तप्रकारकी शक्तिवाला ( सोतृभिः ) अपनी संस्कृत करनेवाली शक्तियोंकेद्वारा ( वृषा ) बलस्वरूप परमात्मा ( पूयते ) पवित्र करता है ।

**भावार्थ**—परमात्मा शब्द, स्पर्श, रूप, रस, गन्ध इन पञ्चतन्मात्राओंके आदिकारण अहङ्कार और महत्तत्त्व तथा प्रकृतिसे भी पहले विराजमान था । उसी ने इस शब्द स्पर्श, रूप, रस, गन्धादि गुण युक्त संसारका निर्माण किया है। जिन विचित्रशक्तियोंसे परमात्मा इन सूक्ष्मसे सूक्ष्म तत्त्वोंका निर्माता है उनसे हमारे हृदयको शुद्ध करें ॥१३॥

अयं मतवाञ्छकुनो यथा
हितोऽव्ये ससार पवमान ऊर्मिणा ।
तव क्रत्वा रोदसी अन्तरा कवे
शुचिर्धिया पवते सोम इन्द्र ते ॥ १४॥

अयं । मतऽवान् । शकुनः । यथा । हितः । अव्ये । ससार । पवमानः । ऊर्मिणा । तव । क्रत्वा । रोदसी इति । अंतरा । कवे । शुचिः । धिया । पवते । सोमः । इंद्र । ते ॥

पदार्थः—( इन्द्र ) हे कर्म्मयोगिन् ! ( ते ) तुभ्यम् ( शुचिः ) शुद्धस्वरूपः ( सोमः ) परमात्मा ( पवते ) पवित्रतां ददाति । ( कवे ) हे व्याख्यातः ! ( तवक्रत्वाधिया ) तव सुन्दर कर्म्मभिः (रोदसी अन्तरा) अस्मिन् ब्रह्माण्डे तुभ्यम् शुभफलं ददाति । अपरञ्च ( अयं, मतवान् ) अयं सर्वज्ञः परमात्मा ( शकुनो-यथा ) विद्युदिव ( हितः ) हितकरो भूत्वा ( अव्ये ) रक्षायुक्त-पदार्थे ( ससार ) प्रविष्टोभवति । एवम् ( पवमानः ) पवित्रयन् परमात्मा (ऊर्मिणा) स्वप्रेम्णः वेगरूपशक्तिभिः सर्वं पवित्रयति ।

पदार्थ—( इन्द्र ) हे कर्म्मयोगिन् ( ते ) तुम्हारे लिये ( शुचिः ) शुद्धस्वरूप ( सोमः ) परमात्मा ( पवते ) पवित्रता देनेवाला है । ( कवे ) हे व्याख्यातः । ( तवक्रत्वाधिया ) तुम्हारे सुन्दर कर्म्मों के द्वारा ( रोदसी-अन्तरा ) इस ब्रह्माण्डमें तुम्हें शुभफल देता है । और (अयं, मतवान्) यह सर्वज्ञ परमात्मा ( शकुनो यथा ) जिस प्रकार विद्युत ( हितः ) हितकर होकर ( अव्ये ) रक्षायुक्त पदार्थ में ( ससार ) प्रविष्ट होजाता है । एवं (पवमानः) सबको पवित्र करनेवाला परमात्मा ( ऊर्मिणा ) अपने प्रेमकी वेगरूप शक्तियों-से सबको पवित्र करता है ।

भावार्थ—परमात्मा कर्म्मोंके द्वारा शुभफलोंका प्रदाता है । इस लिये मनुष्योंको चाहिये कि वे उत्तम कर्म्म करें । ताकि उन्हें कर्म्मानुसार उत्तम फल मिले ॥ १२ ॥

द्रापिं वसा॑नो यज॒तो दि॑वि॒स्पृशं॑-
मन्तरिक्ष॒प्रा भुव॑ने॒ष्वर्पि॑तः ।
स्व॑र्जज्ञा॒नो नभ॑सा॒भ्य॑क्रमीत्प्र॒त्नम॑स्य
पि॒तर॒मा वि॑वासति ॥ १४ ॥

द्रापिं । वसा॑नः । य॒जतः । दि॒वि॒ऽस्पृशं॑ । अ॒न्त॒रि॒क्ष॒ऽप्राः । भुव॑नेषु । अर्पि॑तः । स्वः॑ जज्ञा॒नः । नभ॑सा । अ॒भि । अ॒क्र॒मी॒त् । प्र॒त्नं । अ॒स्य । पि॒तरं॑ । आ । वि॒वा॒स॒ति ॥ १४ ॥

पदार्थः—( द्रापिम् ) यः स्वकवचकर्म्मभिः ( वसानः ) शारीरिकींयात्रां करोति । ( यजतः ) अमुं कर्म्मशीलम् ) ( दिविस्पृशम् ) सत्कर्म्मभिरुचपुरुषम् ( अन्तरिक्षप्राः ) अन्तरिक्ष पूरकः परमात्मा ( भुवनेष्वर्पितः ) यः सर्वत्र विद्यते ( स्वर्जज्ञानः ) स्वर्गादिलोकानामुत्पादकः ( नभसा ) सूक्ष्मसूत्रात्मभिः (अक्रमीत्) चेष्टते (अस्यपितरम्) अस्यब्रह्माण्डस्यपिता ( प्रत्नम् ) अपि च प्राचीनोऽस्ति । तमुपासकः ( आविवासति ) स्वलक्ष्यं कृत्वा गृह्णाति ।

पदार्थ—(द्रापिम) जो अपने कवचरूपी कर्म्मोंके द्वारा (वसानः) शारीरिकयात्रा करता है । (यजतः) उस कर्म्मशील (दिविस्पृशम्) सत्कर्म्मों-द्वारा उच्च पुरुषको ( अन्तरिक्षप्रा ) अन्तरिक्षकी पूर्ति करनेवाला परमात्मा ( भुवनेष्वर्पितः ) जो सर्वत्र व्याप्त है । ( स्वर्जज्ञानो ) स्वर्गादि लोकोंको उत्पन्न करनेवाला ( नभसा ) सूक्ष्मसूत्रात्मा द्वारा ( अक्रमीत ) चेष्टा करता-है । ( अस्य पितरं ) इस संपूर्ण ब्रह्माण्डका जो पिता है ( प्रत्नं ) और-

जो कि प्राचीन है । उसको उपासक पुरुष ( आविवासति ) अपना लक्ष्य बनाकर ग्रहण करता हैं ।

भावार्थ—स्वर्गलोकके अर्थ यहां सुखकी अवस्था विशेषके हैं ॥१४॥

सो अस्य विशे महि शर्म यच्छति
यो अस्य धाम प्रथमं व्यानशे ।
पदं यदस्य परमे व्योमन्यतो विश्वा
अभि सं याति संयतः ॥ १५ ॥ १४ ॥

सः । अस्य । विशे । महि । शर्म । यच्छति । यः । अस्य । धाम । प्रथमं । विऽआनशे । पदं । यत् । अस्य । परमे । विऽओमनि । अतः । विश्वाः । अभि । सं । याति । संऽयतः ॥

पदार्थः—( सः ) उक्तपरमात्मा ( अस्य ) जिज्ञासोः ( विशे ) शरणागते सति ( महि ) महत् ( शर्म्म ) सुखं तस्मै ( यच्छति ) ददाति । यो जिज्ञासुः ( अस्य धाम ) अस्य स्वरूपम् ( प्रथमम् ) प्राक् ( व्यानशे ) प्रविश्य गृह्णाति । अपरञ्च ( यत्, अस्य ) परमात्मनः ( पदम् ) स्वरूपमस्ति । ( परमे, व्योमनि ) यः सूक्ष्मादपि सूक्ष्मे महदकाशे विस्तीर्णस्तं गृह्णाति । ( अतः ) अस्मात्कारणात् ( विश्वाः ) सर्वथा ( संयतः ) संयमी भूत्वा ( सत्कर्माण्यभि ) सत्कर्म्माणि ( संयाति ) प्राप्नोति ।

पदार्थ—( सः ) उक्त परमात्मा ) ( अस्य) जिज्ञासु के ( विशे )-शरणागत होनेपर ( महि ) बड़ा ( शर्म्म ) सुख ( यच्छति ) उसको देता-

है । ( यः ) जो जिज्ञासु ) ( अस्य धाम ) इसके स्वरूपको ( प्रथमं ) पहले ( व्यानशे ) प्रवेश होकर ग्रहण करता है । और ( यत् ) जो ( अस्य ) इस परमात्माका ( पदं ) स्वरूप है । ( परमे व्योमनि ) जो सूक्ष्मसे सूक्ष्म महदकाशमें फैला हुआ है । उसको ग्रहण करता है ।( अतः ) इसलिये (विश्वाः) सब प्रकारसे ( संयतः ) संयमी जिज्ञासु कर ( सत्कर्म्माण्यभि ) सत्कर्मोंको ( संयाति ) प्राप्त होता है ।

भावार्थ—तद्विष्णोः परमं पदं सदापश्यन्ति सूरयः, इत्यादि विष्णु के स्वरूप निरूपण करनेवाले मंत्रोंमें जो विष्णुके स्वरूपका वर्णन है वही वर्णन यहां पद शब्दसे किया है । पदके अर्थ किसी अङ्ग विशेषके नहीं किन्तु स्वरूपके हैं ॥ १९ ॥

प्रो अयासीदिन्दुरिन्द्रस्य निष्कृतं सखा
सख्युर्न प्र मिनाति सङ्गिरम् ।
मर्य इव युवतिभिः समर्षति सोमः
कलशे शतयाम्ना पथा ॥ १६ ॥

प्रो इति । अयासीत् । इंदुः । इंद्रस्य । निःऽकृतं । सखा । सख्युः । न । प्र । मिनाति । संऽगिरं । मर्यःऽइव । युवतिऽभिः । सं । अर्षति । सोमः । कलशे । शतऽयाम्ना । पथा ॥

पदार्थः—( इन्दुः ) सर्वप्रकाशः परमात्मा ( इन्द्रस्य ) कर्मयोगिनः ( निष्कृतम् ) संस्कृतमन्तःकरणम् (प्रो अयासीत्) सर्वप्रकारेण प्राप्नोति । अन्यच्च ( सख्युः ) मित्रस्य ( न ) इव ( सखा ) मित्रं भवति । अपरञ्च ( संगिरम् ) सर्वशक्तीः

( प्रमिनाति ) प्रमाणयति ( युवतिभिरिव ) प्रौढस्त्रीभिर्यथा ( मर्य्यः ) मर्य्यादा स्थिरा भवति । ( कलशे ) अस्मिन् ब्रह्माण्डकलशे ( शतयाम्ना पथा ) शतशक्तिमता मार्गेण परमात्मा ( समेर्षति ) सर्वथा गच्छति ।

पदार्थ—( इन्दुः ) सर्वप्रकाशक परमात्मा ( इन्द्रस्य ) कर्म्मयोगी के ( निष्कृतं ) संस्कृत अन्तःकरणको ( प्रो अयासीत ) भलिभाँति प्राप्त होता है । और ( संख्युः ) सखाके ( न ) समान ( सखा ) होता है । और ( संगिरं ) सम्पूर्ण शक्तियोंको ( प्रमिनाति ) प्रमाणित कर देता है । ( युवतिभिरिव ) युवति स्त्रियोंके द्वारा जैसे ( मर्य्यः ) मर्य्यादा स्थिर कि जाती है । ( कलशे ) इस ब्रह्माण्डरूपी कलशमें ( शतयाम्ना पथा ) सैकड़ों शक्तियों वाले रास्तेसे परमात्मा ( समर्षति ) भलिभाँति गति कर रहा है ।

भावार्थ—जिस प्रकार स्त्रियें अपने सदाचारसे मर्यादाको बान्धतीं हैं, वा यों कहो कि मर्यादापुरुषोत्तम पुरुषोंको उत्पन्न करके मर्य्यादा बान्धतीं हैं इसी प्रकार परमात्मा वेद मर्य्यादारूप वैदिक पथसे महापुरुषोंका उत्पन्न करके मर्य्यादा बान्धते हैं ॥ १६ ॥

प्र वो धियो मन्द्रयुवो विपन्युवः
पनस्युवः संवसनेष्वक्रमुः ।
सोमं मनीषा अभ्यनूषत स्तुभोऽभि
धेनवः पयसेमशिश्रयुः ॥ १७ ॥

प्र । वः । धियः । मंद्रऽयुवः । विपन्युवः । पनस्युवः । संऽवसनेषु । अक्रमुः । सोमं । मनीषाः । अभि । अनूषत । स्तुभः । अभि । धेनवः । पयसा । ईं । अशिश्रयुः ॥ १७ ॥

पदार्थ—हे परमात्मन् ! ( प्रवोधियः ) तव ध्यानपरायणाः ( मन्द्रयुवः ) तवानन्दयाचकाः ( विपन्युवः ) उपासकाः ( पनस्युवः ) स्तुतिं कामयमानाः ( संवसनेषु ) उपासनास्थानेषु ( अक्रमुः प्रविशन्ति । अपिच ( सोमम् ) सर्वोत्पादकं परमात्मानम् ( मनीषा ) मनसः सूक्ष्मवृत्त्या ( अभ्यनूषत ) सर्वथा भवति निवसन्ति । ( स्तुभो ) यथोपास्यस्य ( अभि ) अभिमुखम् ( धेनवः ) इन्द्रियाणां वृत्तयः ( पयसा ) वेगेन ( अशिश्रयुः ) तमाश्रयन्ति । एवमुपासकचित्तवृत्तय ईश्वरस्याभिमुखं गच्छन्ति ।

पदार्थ—हे परमात्मन् ! ( प्रवोधियः ) तुम्हारा ध्यान करनेवाले ( मन्द्रयुवः ) तुम्हारा आनन्द चाहनेवाले ( विपन्युवः ) उपासकलोग ( पनस्युवः ) स्तुति की कामना करते हुए ( संवसनेषु ) उपासना स्थानोंमें ( अक्रमुः ) प्रवेश करते हैं । और ( सोमं ) सर्वोत्पादक परमात्माको ( मनीषा ) चित्तकी सूक्ष्मवृत्ति द्वारा ( अभ्यनूषत ) सब प्रकारसे आपमें निवास करते हैं ( स्तुभो ) जैसे उपास्यके ( अभि ) अभिमुख ( धेनवः ) इन्द्रियोंकी वृत्तियें ( पयसा ) वेगसे ( अशिश्रयुः ) उसको आश्रयण करतीं हैं । इसी प्रकार उपासककी चित्तवृत्तियें ईश्वर की ओर झुक जातीं हैं ।

भावार्थ—जो पुरुष समाहत चित्तसे ईश्वरका ध्यान करते हैं । उन की चित्तवृत्तियें प्रबलप्रवाहसे ईश्वरकी ओर झुक जातीं हैं ॥ १७ ॥

आ नः सोम संयन्तं पिप्युषी-
मिषमिन्दो पवस्व पवमानो अस्त्रिधम् ।
या नो दोहते त्रिरहन्नसंश्चुषी
क्षुमद्वाजवन्मधुमत्सुवीर्यम् ॥ १८ ॥

आ । नः । सोम । संऽयतं । पिप्युषीं । इषं । इंदो इति ।
पवस्व पवमानः । अस्रिधं । या । नः । दोहते । त्रिः ।
अहन् । असश्चुषी । क्षुऽमत् । वाजऽवत् । मधुऽमत् । सुऽवीर्यं ॥ १८ ॥

पदार्थः—(सोम) हे परमात्मन् ! (इन्दो) हे प्रकाश स्वरूप । (त्वम्) (नः) अस्माकम् (सञ्चतम्) सम्बन्धि अपि च (पिप्युषी) वृद्धियुक्तम् (इषम्) ऐश्वर्य्यम् (अस्रिधम्) अक्षयधनैः (आपवस्व) सर्वथा मां पवित्रयतु । (या) यतोहि (नः) अस्माकम् (त्रिरहन्) भूतादित्रिकालेषु (असश्चुषी) अप्रतिबन्धम (क्षुमत) महदैश्वर्य्यवत (वाजवत) बलयुक्तम् (मधुमत) मधुयुक्तम् (सुवीर्य्यम्) बलकारकमैश्वर्य्यं भवान् (दोहते) परिपूरयतु ।

पदार्थ—(सोम) हे परमात्मन् ! (इन्दा) हे प्रकाशस्वरूप । आप (नः) हमारे (संयतं) सम्बन्धी और (पिप्युषीम्) वृद्धियुक्त (इषं) ऐश्वर्यको (अस्रिधं) जो अक्षय हो ऐसे धनसे (आपवस्व) सब ओर से हमको पवित्र करे । (या) जो कि (नः) हमारे सम्बन्धमें (त्रिरहन्) भूत, भविष्य, वर्तमान तीनों कालोंमें (असश्चुषी) प्रतिबन्ध रहित (क्षुमत्) बहुत ऐश्वर्य्य वाली (वाजवत्) बलवाली (मधुमत्) मधुर युक्त (सुवीर्य) बल करने वाले ऐश्वर्यको आप (दोहते) परिपूर्ण करें ॥

भावार्थ—स्वनियमानुकूलचलनेवाले पुरुषोंके लिये परमात्मा अक्षय धनको प्रदान करते हैं ॥ १८ ॥

वृषा मतीनां पवते विचक्षणः सोमो
अह्नः प्रतरीतोषसो दिवः ।

क्राणा सिन्धूनां कलशाँ अवीवश-
दिन्द्रस्य हार्द्याविशन्मनीषिभिः ॥ १९ ॥

वृषा । मतीनां । पवते । विऽचक्षणः । सोमः । अह्नः । प्रऽतरीता । उषसः । दिवः । क्राणा । सिंधूनां । कलशान् । अवीवशत् । इंद्रस्य । हार्दि । आऽविशन् । मनीषिऽभिः ॥

पदार्थः—परमात्मा ( मनीषिभिः ) सदुपदेशैरुपदिष्टस्य ( इन्द्रस्य ) कर्म्मयोगिनः ( हार्दि ) हृदये ( आविशन् ) प्रवेशं कुर्वन् ( कलशान् ) कर्म्मयोगिनोऽन्तःकरणानि ( अवीवशत् ) कामयते । यः परमात्मा ( दिवः ) द्युलोकस्य ( सिन्धूनां ) स्यन्दनशीलसूक्ष्मपदार्थानां ( क्राणा ) कर्ता अस्ति । अपि च ( अह्नः ) दिवसस्य ( उषसः ) ज्योतिषां ( प्रतरीता ) वर्द्धकोऽस्ति । ( सोमः ) सर्वोत्पादकपरमात्मा ( विचक्षणः ) सर्वज्ञः परमेश्वरो ( मतीनां ) उपासकानां कामनानां ( वृषा ) पूरकः पूर्वोक्तपरमात्मा अस्मान् ( पवते ) पवित्रयतु ।

पदार्थ—परमात्मा ( मनीषिभिः ) सदुपदेशकोंसे उपदेश किया हुआ ( इन्द्रस्य ) कर्मयोगीके ( हार्दि ) हृदयमें ( आविशन् ) प्रवेश करता हुआ ( कलशान् ) कर्मयोगियोंके अन्तःकरणोंकी ( अवीवशत् ) कामना करता है । जो परमात्मा ( दिवः ) द्युलोकको ( सिन्धूनां ) स्यन्दनशील सूक्ष्म तत्त्वोंका ( क्राणा ) कर्ता है और ( अह्नः ) दिनके ( उषसः ) ज्योतियोंका ( प्रतरीता ) वर्द्धक है । ( सोमः ) वह सर्वोत्पादक परमात्मा ( विचक्षणः ) सर्वज्ञ परमेश्वर हमारी ( मतीनां ) उपासकोंको कामनाओंकी ( वृषा ) पूर्ति करने वाला उक्त परमात्मा हम लोगोंको ( पवते ) पवित्र करे।

भावार्थ—जो लोग सदुपदेशकोंके सदुपदेशको श्रद्धापूर्वक ग्रहण करते हैं, उनके अन्तःकरणोंको परमात्मा अवश्यमेव पवित्र करता है ॥

मनीषिभिः पवते पूर्व्यः कविर्नृ-
भिर्यतः परि कोशाँ अचिक्रदत् ।
त्रितस्य नाम जनयन्मधु
क्षरदिन्द्रस्य वायोः सख्याय कर्तवे ॥२०॥१५॥

मनीषिऽभिः । पवते । पूर्व्यः । कविः । नृऽभिः । यतः । परि । कोशान् । अचिक्रदत् । त्रितस्य । नाम । जनयन् । मधु । क्षरत् । इंद्रस्य । वायोः । सख्याय । कर्तवे ॥

पदार्थः—( मनीषिभिः ) विद्वद्भिरुपदिष्टः ( पूर्व्यः ) अनादिसिद्धः परमात्मा ( पवते ) अस्मान् पवित्रयति । यः परमात्मा ( कविभिः ) विद्वद्भिः ( यतः ) गृहीतोऽस्ति । सः ( कोशान् ) प्रकृतेः कोशान् ( अचिक्रदत् ) शब्दादिभिः प्रसिद्धयति । सः ( मधु ) स्वानन्दः परमात्मा ( त्रितस्य ) सत्वरजस्तमसां साम्यावस्थारूपप्रकृतिपुञ्जं (नामजनयन्) नामरूपे विभजमानः ( इन्द्रस्य ) कर्म्मयोगिनः ( वायोः ) तथा ज्ञानयोगिनः ( सख्याय ) मैत्रीं ( कर्तवे ) कर्तुं ( क्षरत् ) निजानन्दं प्रवाहयति ।

पदार्थ—( मनीषिभिः ) विद्वानोंसे उपदेश किया हुआ ( पूर्व्यः ) अनादिसिद्ध परमात्मा ( पवते ) हमको पवित्र करता है जो परमात्मा

( कविभिः ) विद्वानों द्वारा ( यतः ) ग्रहण किया हुआ है, वह ( कोशान् ) प्रकृतिके कोशोंको ( अचिक्रदत् ) शब्दादि द्वारा प्रसिद्ध करता है । वह ( मधु ) आनन्दयुक्त परमात्मा (त्रितस्य) सत्व रज और तमो गुणकी साम्यावस्थारूप प्रकृतिपुञ्जको ( नामजनयन् ) नाम रूपमें विभक्त करता हुआ ( इन्द्रस्य ) कर्मयोगी के ( वायोः ) तथा ज्ञानयोगीके साथ (सख्याय) मैत्री ( कर्तवे ) करनेके लिये ( क्षरत् ) अपने आनन्दको प्रवाहित करता है ॥

भावार्थ—कर्मयोगी और ज्ञानयोगी लोग परमात्मगुणोंके धारण करनेसे परमात्माके साथ एक प्रकारकी मैत्री उत्पन्न करते हैं । अर्थात् " अहंवात्वासिभगवो देवेतत्वंवा अहमस्मि " कि-" मैं, तू , " और " तू मैं " इस प्रकारकी अहंग्रहउपासना द्वारा अर्थात् अभेदोपासना द्वारा परमात्माका ध्यान करते हैं ॥ २० ॥

अयं पुनान उषसो विरोचयदयं
सिन्धुभ्यो अभवदु लोककृत् ।
अयं त्रिः सप्त दुदुहान आशिरं
सोमो हृदे पवते चारु मत्सरः ॥ २१ ॥

अयं । पुनानः । उषसः । वि । रोचयत् । अयं । सिंधुऽभ्यः । अभवत् । ऊं इति । लोकऽकृत् । अयं । त्रिः । सप्त । दुदुहानः । आऽशिरं । सोमः । हृदे । पवते । चारु । मत्सरः ।

पदार्थः—( अयं ) पूर्वोक्तः परमात्मा स्वशक्तिभिः ( पुनानः ) पवित्रयन् अपिच ( उषसः ) प्रभातकालं ( विरोचयत् ) प्रकाशयन् ( सिन्धुभ्यः ) स्यन्दनशीलप्रकृतेः सूक्ष्मतत्त्वैः

( लोककृत् ) जगत्कर्ता ( अभवत् ) भवतिस्म । ( उ ) अयं दृढताबोधकोऽस्ति ( अयं, त्रिः, सप्त ) अयं परमात्मा प्रकृतेरेकविंशतिसख्याकमहत्तत्वादिपदार्थान् ( दुदुहानः ) दुहन् ( आशिरं ) ऐश्वर्य्यमुत्पाद्य ( सोमः ) अयं जगदुत्पादकपरमात्मा किम्भूतः, ( चारुमत्सरः ) अतिशयाह्लादकः ( हृदे ) मम हृदये ( पवते ) पवित्रयति ।

**पदार्थ**—( अयं ) पूर्वोक्त परमात्मा अपनी शक्तियोंसे ( पुनानः ) पवित्र करता हुआ और ( उषसः ) उषाकालका ( विरोचयत् ) प्रकाश करता हुआ ( सिन्धुभ्यः ) स्यन्दनशीला प्रकृतिके सूक्ष्म तत्त्वोंसे ( लोककृत् ) संसारका करनेवाला ( अभवत् ) हुआ ( उ ) यह दृढताबोधक है । ( अयं त्रिः सप्त ) यह परमात्मा प्रकृतिके एकविंशति महत्तत्वादि तत्त्वोंको (दुदुहानः) दोहन करता हुआ (आशिरं) ऐश्वर्यको उत्पन्न करके (सोमः) यह जगदुत्पादक परमात्मा ( चारुमत्सरः ) जो अत्यन्त आह्लादक है वह ( हृदये ) हमारे हृदयमें ( पवते ) पवित्रता प्रदान करता है ।

**भावार्थ**—परमात्माने प्रकृतिसे महत्तत्व उत्पन्न किया और महत्तत्त्वसे जो अहंकारादि एकविंशति गण हैं उसीका यहां " त्रिः सप्त " शब्दसे गणन है किसी अन्यका नहीं ॥ २१ ॥

पव॑स्व सोम दि॒व्येषु॒ धाम॑सु सृजा॒न

इन्दो॑ क॒लशे॑ प॒वित्र॒ आ ।

सीद॒न्निन्द्र॑स्य ज॒ठरे॑ कनि॑क्रद॒-

न्नृभि॒र्यतः सूर्य॒मारो॑हयो दि॒वि ॥ २२ ॥

पव॑स्व । सो॒म॒ । दि॒व्येषु॑ । धाम॑ऽसु । सृ॒जा॒नः इं॒दो॒ इति॑ ।

कलशे॑ । प॒वित्रे॑ । आ । सीद॑न् । इंद्र॑स्य । ज॒ठरे॑ । कनि॑-क्रदत् । नृऽभिः॑ । य॒तः । सूर्य॑ । आ । अ॒रो॒ह॒यः॒ दि॒वि ॥

पदार्थः—( सोम ) हे परमात्मन् ! ( दिव्येषु धामसु ) द्युलोकादिस्थानेषु ( सृजानः ) उक्तसृष्टिरचयिता त्वं ( पवस्व ) पवित्रय । ( इन्दो ) हे प्रकाशस्वरूप परमात्मन् ! ( पवित्रे कलशे ) पूतान्तःकरणेषु ( आसीदन् ) तिष्ठन् ( इन्द्रस्य ) कर्म्मयोगिनः ( जठरे ) सत्तास्फूर्तिदायके जठराग्नौ ( कनिक्रदत् ) गर्जन् ( नृभिर्यतः ) मनुष्यस्थानविषये त्वं ( दिवि ) द्युलोके (सूर्य्यं) रवेः ( आरोहय ) आश्रयणं कुरु ।

पदार्थ—( सोम ) हे परमात्मन् ! ( दिव्येषु धामसु ) द्युलोकादि स्थानोंमें ( सृजानः ) उक्त सृष्टिको रचनेवाले आप ( पवस्व ) पवित्र करें । ( इन्दो ) हे प्रकाशस्वरूप ! ( पवित्रे कलशे ) पवित्र अन्तःकरणों में ( आसीदन् ) स्थिति करते हुए आप ( इन्द्रस्य ) कर्मयोगीकी ( जठरे ) सत्तास्फूर्ति देनेवाली जठराग्निमें ( कनिक्रदत् ) गर्जते हुए ( नृभिर्यतः मनुष्यों के स्थान के विषय आप ( दिवि ) द्युलोकमें ( सूर्यं ) सूर्य को ( आरोहयः ) आश्रय करे ।

भावार्थ—परमात्मा सूर्य-चन्द्रमादिकोंका निर्माण करता हुआ इस विविध प्रकारकी रचनाका निर्माण करके प्रजाको उद्योगी बनाने के लिये कर्मयोगी की कर्माग्निको प्रदीप्त करता है ॥ २२ ॥

अद्रि॑भिः सु॒तः प॑वसे प॒वित्र॒ आँ
इन्द॒विन्द्र॑स्य ज॒ठरे॑ष्वावि॒शन् ।

त्वं नृचक्षा अभवो विचक्षण सोम
गोत्रमङ्गिरोभ्योऽवृणोरप ॥ २३ ॥

अद्रिऽभिः । सुतः । पवसे । पवित्रे । आ । इंदोइति । इंद्रस्य । जठरेषु । आऽविशन् । त्वं । नृऽचक्षाः । अभवः । विऽचक्षण । सोम । गोत्रं । अंगिरःऽभ्यः । अवृणोः । अप ॥

पदार्थः—( इन्दो ) हे प्रकाशस्स्वरूपपरमात्मन् । त्वं ( इन्द्रस्य ) कर्म्मयोगिनः कर्म्मप्रदीप्ते ( जठरेषु ) अग्नौ ( आविशन् ) प्रवेशं कुर्वन् ( अद्रिभिः सुतः ) वज्रेण संस्कृतं कर्म्मयोगिनं ( पवसे ) पवित्रयसि । ( आ ) अपिच ( पवित्रे ) अस्य पवित्रान्तःऽकरणे ( अभवः ) निवस ( नृचक्षाः ) त्वं सर्वद्रष्टाऽसि ( विचक्षणः ) तथा सर्वज्ञोऽसि । ( सोम ) हे जगदुत्पादक ! त्वं ( अङ्गिरोभ्यः ) प्राणायामा दिभिः ( गोत्रं ) कर्म्मयोगिशरीरं रक्ष । अन्यच्च तस्य विघ्नानि ( अपावृणोः ) अपसारय ।

( इन्दो ) हे प्रकाशस्वरूप परमात्मन् ! आप ( इन्द्रस्य ) कर्मयोगी के कर्मप्रदीप्त ( जठरेषु ) अग्नि में ( आविशन् ) प्रवेश करते हुए ( अद्रिभिः सुतः ) वज्रसे संस्कार किये हुए कर्मयोगीको ( पवसे ) पवित्र करते हैं । ( आ ) और ( पवित्रे ) उसके पवित्र अन्तःकरणमें ( अभवः ) निवास करें । ( नृचक्षाः ) तुम सर्वद्रष्टा हो ( विचक्षणः ) तथा सर्वज्ञ हो । ( सोम ) हे जगदुत्पादक ! आप ( अङ्गिरोभ्यः ) प्राणायामादि द्वारा (गोत्रं) कर्मयोगीके शरीरकीरक्षा करें और उसके विघ्नों को ( अपावृणोः ) दूर करें ॥

**भावार्थ**—"गौर्वाग्गृहीता अनेनेति गोत्रं शरीरम्" जो वाणी को ग्रहण करे उसका नाम यहां गोत्र है इस प्रकार यहां शरीर और प्राणोंका वर्णन इस मन्त्रमें किया गया है। और सायणाचार्यने गोत्रके अर्थ यहां मेघके किये हैं और "आङ्गिरोभ्यः" के अर्थ कुछ नहीं किये हैं यदि सायणाचार्यके अर्थोंको उपयुक्त भी माना जाय तो अर्थ ये बनते हैं हे सोमलते! तुम अङ्गिरादि ऋषियोंसे मेघोंको दूर करो इस प्रकार सर्वथा असंबद्ध प्रलाप हो जाता है। वास्तवमें यह प्रकरण कर्मयोगीका है और उसी को प्राणोंकी पुष्टिके द्वारा विघ्नोंको दूर करना लिखा है॥२३॥

त्वां सोम पवमानं स्वाध्योऽनु
विप्रासो अमदन्नवस्यवः।
त्वां सुपर्ण आभरद्दिवस्परीन्दो
विश्वाभिर्मतिभिः परिष्कृतम् ॥ २४ ॥

त्वां। सोम। पवमानं। सुऽआध्यः। अनु। विप्रासः। अमदन्। अवस्यवः। त्वां। सुऽपर्णः। आ। अभरत्। दिवः। परि। इंदो इति। विश्वाभिः। मतिऽभिः। परिऽकृतं॥

**पदार्थः**—( सोम ) हे परमात्मन्! ( पवमानं,त्वां ) सर्वपूज्यं त्वां ( स्वाध्यः ) सुकर्म्माणः किम्भूताः ( विप्रासः ) मेधाविनः पुनः किम्भूताः ( अवस्यवः ) त्वदुपासनपरायणाः ( अन्वमदन् ) भवन्तंस्तुवन्ति। ( इन्दो ) हे प्रकाशस्वरूप! ( त्वां ) भवन्तं ( सुपर्णः ) सबोधोपासकः ( आभरत् ) उपासनया गृह्णाति किम्भूतस्त्वं ( दिवस्परि ) द्युलोकस्य मर्य्यादा-

मुलङ्घ्यस्थितः । अपरञ्च ( विश्वाभिर्मतिभिः ) निखिलज्ञानैः ( परिष्कृतं ) अलङ्कृतोऽसि ।

पदार्थ—( सोम ) हे परमात्मन् ! ( पवमानं त्वां ) सर्वपूज्य तुझको ( स्वाध्यः ) सुकर्म्मीलोग ( विप्रासः ) जो मेधावी हैं । और ( अवस्यवः ) आपकी उपासनाकी इच्छा करनेवाले हैं । वे ( अन्वमदन् ) आपकी स्तुति करते हैं । ( इन्दो ) हे प्रकाशस्वरूप ( त्वां ) तुझको ( सुपर्णः ) बोधयुक्त उपासक ( आभरत् ) उपासना द्वारा ग्रहण करता है । तुम कैसे ( दिवस्परि ) कि द्युलोककी भी मर्य्यादा को उलंघन करके वर्तमान हो । और ( विश्वाभिर्मतिभिः ) सम्पूर्ण ज्ञानोंसे ( परिष्कृतम् ) अलंकृत हो ।

भावार्थ—जो लोग विद्या द्वारा अपनी बुद्धिका परिष्कार करते हैं । वेही परमात्माकी विभूतिको जान सकते हैं । अन्य नहीं ॥ २४ ॥

अव्ये पुनानं परि वार ऊर्मिणा हरिं
नवन्ते अभि सप्त धेनवः ।
अपामुपस्थे अध्यायवः कविमृतस्य
योना महिषा अहेषत ॥ २५ ॥ १६ ॥

अव्ये । पुनानं । परि । वारे । ऊर्मिणा । हरिं । नवंते । अभि । सप्त । धेनवः । अपां । उपऽस्थे । अधि । आयवः । कविं । ऋतस्य । योना । महिषाः । अहेषत ॥

पदार्थः—( अव्ये, वारे ) वरणीयपुरुषं ( ऊर्मिणा ) प्रीत्या ( पुनानं ) पवित्रकर्तारं ( हरिं ) परमात्मानं ( सप्तधेनवः )

इन्द्रियाणां सप्तवृत्तयः ( अभिनवन्ते ) प्राप्नुवन्ति ( अपामुपस्थे) कर्म्माध्यक्षतायांयः( कविं ) सर्वज्ञोऽस्ति तं ( अध्यायवः ) उपासकाः किम्भूताः ( महिषाः ) महाशयाः ( ऋतस्ययोना ) सत्यस्थानेषु ( अध्यहेषत ) उपासनां कुर्वन्ति ।

पदार्थ—( अव्ये वारे ) वरणीय पुरुषको ( ऊर्मिणा ) प्रेमसे ( पुनानं ) पवित्र करनेवाले ( हरिम् ) परमात्माको ( सप्तधेनवः ) इन्द्रियोंकी सात वृत्तियें ( अभिनवन्ते ) प्राप्त होती हैं ( अपामुपस्थे ) कर्म्मोंकी अध्यक्षतामें जो ( कविं ) सर्वज्ञ है । उसको ( अध्यायवः ) उपासक लोग जो ( महिषाः ) महाशय हैं वे ( ऋतुस्ययोना ) सच्चाईके स्थानमें ( अध्यहेषत ) उपासना करते हैं ।

भावार्थ—सदसद्विवेकी लोग अन्य उपास्य देवोंकी उपासनाको छोड़कर सब कर्म्मोंके अधिष्ठाता परमात्माकी ही एकमात्र उपासना करते हैं । किसी अन्य की नहीं ॥ २५ ॥

इन्दुः पुनानो अति गाहते मृधो
विश्वानि कृण्वन्त्सुपथानि यज्यवे ।
गाः कृण्वानो निर्णिजं हर्यतः कवि-
रत्यो न क्रीळन्परि वारमर्षति ॥ २६ ॥

इंदुः । पुनानः । अति । गाहते । मृधः । विश्वानि । कृण्वन् । सुऽपथानि । यज्यवे । गाः । कृण्वानः । निःऽनिजं । हर्यतः । कविः । अत्यः । न । क्रीळन् । परि । वारं । अर्षति ॥२६॥

पदार्थः—( यज्वे ) यज्ञकर्तृभ्यो यजमानेभ्यः परमात्मा ( विश्वानिसुपथानि ) सर्वान् मार्गान्( कृण्वन् ) संशोधयन् ( मृधः ) तस्य विघ्नानि ( अतिगाहते ) मर्दनं करोति । अपिच ( पुनानः) तं पवित्रयन्, अन्यच्च ( निर्निजं ) निजरूपम् ( गाः कृण्वानः ) सरलयन् ( हर्य्यतः ) सकान्तिमयः परमात्मा किम्भूतः ( कविः ) सर्वज्ञः ( अत्योन ) विद्युदिव ( क्रीळन् ) खेलन् ( वारं ) वरणीय पुरुषं ( पर्य्यर्षति ) प्राप्नोति ॥

पदार्थ—( यज्वे ) यज्ञ करनेवाले यजमानोंके लिये परमात्मा ( विश्वानि सुपथानि ) सब रास्तोंको( कृण्वन् ) सुगम करता हुआ ( मृधः ) उनके विघ्नोंको ( अतिगाहते ) मर्दन करता है । और ( पुनानः ) उनको पवित्र करता हुआ और ( निर्निजं ) अपने रूपको ( गाः कृण्वानः ) सरल करता हुआ ( हर्य्यतः ) वह कान्तिमय परमात्मा ( कविः ) सर्वज्ञ ( अत्योन ) विद्युत्के समान ( क्रीळन् ) क्रीड़ा करता हुआ ( वारं ) वरणीय पुरुषको ( पर्य्यर्षति ) प्राप्त होता है ।

भावार्थ—जो लोग परमात्माकी आज्ञाओं का पालन करते हैं । परमात्मा उनके लिये सब रास्तों को सुगम करता है ॥ २६ ॥

असश्चतः शतधारा अभिश्रियो
हरिं नवन्तेऽव ता उदन्युवः ।
क्षिपो मृजन्ति परि गोभिरावृतं
तृतीये पृष्ठे अधि रोचने दिवः ॥ २७ ॥

असश्चतः । शतऽधाराः । अभिऽश्रियः । हरिं । नवंते । अवं । ताः । उदन्युवंः । क्षिपंः । मृजंति । परिं । गोभिः । आऽवृतं । तृतीयें । पृष्ठे । अधिं । रोचने । दिवः ॥ २७ ॥

पदार्थः—( उदन्युवः ) प्रीतेः ( ताः ) पूर्वोक्ताः ( शतधाराः ) शतधाराः याः ( असश्चतः ) नानारूपेषु ( अभिश्रियः ) स्थितिं लभन्ते । ताः ( हरिं ) परमात्मानं ( अवनवन्ते ) प्राप्नुवन्ति ( गोभिरावृतं ) प्रकाशपुञ्जंपरमात्मानं ( क्षिपः ) बुद्धिवृत्तयः ( मृजन्ति ) विषयं कुर्वन्ति । यः परमात्मा ( दिवः, तृतीये, पृष्ठे ) द्युलोकस्य तृतीयके पृष्ठे विराजते । अन्यच्च ( रोचने ) प्रकाशस्वरूपोऽस्ति बुद्धिवृत्तयस्तं प्रकाशयन्ति ।

पदार्थ—( उदन्युवः ) प्रेम की ( ताः ) वे ( शतधाराः ) सैकड़ों धारायें ( असश्चतः ) जो नानारूपों में ( अभिश्रियः ) स्थिति को लाभ कर रही हैं । वे ( हरिं ) परमात्माको ( अवनवन्ते ) प्राप्त होती हैं । ( गोभिरावृतं ) प्रकाशपुञ्ज परमात्माको ( क्षिपः ) बुद्धिवृत्तियें ( मृजन्ति ) विषय करती हैं । जो परमात्मा ( दिवस्तृतीये पृष्ठे ) द्युलोकके तीसरे पृष्ठ पर विराजमान है । और ( रोचने ) प्रकाशस्वरूप है । उस को बुद्धिवृत्तियें प्रकाशित करती हैं ॥

भावार्थ—द्युलोकादिकोंके प्रकाशक परमात्माको मनुष्य ज्ञानकी वृत्तियों से ही साक्षात्कार करता है । अन्यथा नहीं ॥ २७ ॥

तवेमाः प्रजा दिव्यस्य रेतसस्त्वं
विश्वस्य भुवनस्य राजसि ।

अथेदं विश्वं पवमान ते वशे त्व-
मिन्दो प्रथमो धामधा असि ॥ २८ ॥

तव । इमाः । प्रऽजाः । दिव्यस्य । रेतसः । त्वं । विश्वस्य । भुवनस्य । राजसि । अथ । इदं । विश्वं । पवमान । ते । वशे । त्वं । इंदो इति । प्रथमः । धामऽधाः । असि ॥

पदार्थः—( तव, दिव्यस्य, रेतसः ) ते दिव्यसामर्थ्यात् ( इमाः, प्रजाः ) एते जना उत्पद्यन्तेस्म । ( त्वं ) पूर्वोक्तः ( विश्वस्य, भुवनस्य ) सम्पूर्णसृष्टेः ( राजसि ) राजाभूत्वा विराजसे । ( पवमान ) हे सर्वपावक परमात्मन् ! ( इदं, विश्वं ) इदं सर्वं जगत् ( ते, वशे ) तवाधीनम् । ( अथ ) अपि च ( इन्दो ) हे प्रकाशस्वरूप परमात्मन्! ( त्वं, प्रथमं ) त्वमेव प्रथमं ( धामधाः, असि ) निवासस्थानमसि ।

पदार्थ—( तव दिव्यस्य, रेतसः ) तुम्हारे दिव्य सामर्थ्यसे ( इमाः प्रजाः ) ये सब प्रजा उत्पन्न हुई हैं । ( त्वं ) तुम ( विश्वस्य ) भुवनस्य ) सम्पूर्ण सृष्टिके ( राजसि ) राजा होकर विराजमान हो । ( पवमान ) हे सबको पवित्र करने वाले परमात्मन् ! ( इदं विश्वं ) ये सम्पूर्ण संसार (ते वशे) तुम्हारे वशमें है । (अथ) और (इन्दो) हे प्रकाशस्वरूप परमात्मन् ! ( त्वं प्रथमं ) तुमही पहले ( धामधाः ) सबके निवास स्थान ( असि ) हो ।

भावार्थ—परमात्मा सबका अधिकरण है । इसलिये सब भूतोंका निवास स्थान वही है ॥ २८ ॥

त्वं समुद्रो असि विश्वावित्कवे
तवेमाः पञ्च प्रदिशो विधर्मणि ।
त्वं द्यां च पृथिवीं चाति जभ्रिषे
तव ज्योतींषि पवमान सूर्यः ॥ २९ ॥

त्वं । समुद्रः । असि । विश्वऽवित् । कवे । तव । इमाः । पंच । प्रऽदिशः । विऽधर्मणि । त्वं । द्यां । च । पृथिवीं । च । अति । जभ्रिषे । तव । ज्योतींषि । पवमान । सूर्यः ॥

पदार्थः—( विश्वावित, कवे ) हे सर्वविश्वज्ञ ! परमात्मन् ! ( त्वं ) पूर्वोक्तस्त्वं ( समुद्रोऽसि ) समुद्रः "सम्यग्द्रवन्ति भूतानि यस्मात्ससमुद्रः, यस्मात्सर्वभूतान्युत्पद्यन्ते तस्येह नाम समुद्रः । ( तव विधर्म्मणि ) तव विशेषसत्तायां ( इमाः, पञ्च, प्रदिशः ) एषां पञ्चभूतानां सूक्ष्माणि पञ्च तन्मात्राणि विराजन्ते । अपि च ( त्वं, द्याञ्च ) त्वं द्युलोकस्य ( पृथिवीञ्च ) पृथिवीलोकस्य च (अति, जभ्रिषे) भरणं पोषणञ्च करोषि । अन्यच्च हे परमात्मन् ! (सूर्य्यः) सूर्य्यो पि (तवऽज्योतींषि) तव तेजांस्यंस्ति ।

पदार्थ— ( विश्ववित कवे ) हे सम्पूर्ण विश्व के ज्ञाता परमात्मन् ( त्वं ) तुम (समुद्रोऽसि) समुद्र हो "सम्यग् द्रवन्ति भूतानि यस्मात् स समुद्रः, जिसमें सब भूत उत्पत्ति स्थिति प्रलय को प्राप्त हों उसका नाम यहां समुद्र है । (तव विधर्म्मणि) तुम्हारी विशेषसत्ता में ( इमाः पञ्च प्रदिशः । इन पांचों भूतों के सूक्ष्म पञ्च तन्मात्र विराजमान हैं । और ( त्वंद्याञ्च ) आप द्युलोक

को ( पृथिवीश्च ) और पृथिवी लोक को अति ( जभ्रिषे ) भरणपोषण करते हैं । और हे पवमान परमात्मन् ! ( सूर्य्यः ) सूर्य्य भी ( तव ज्योतींषि ) तुम्हारी ज्योति है ।

भावार्थ—सम्पूर्ण भूतों की उत्पत्ति स्थिति और प्रलय का हेतु होने से परमात्माका नाम समुद्र है । उसी सर्वाधार सर्वनिधिं महासागर से यह सम्पूर्ण संसार की उत्पत्ति स्थिति प्रलय होता है । किसी अन्य से नहीं ॥ २९ ॥

त्वं पवित्रे रजसो विधर्मणि देवे-
भ्यः सोम पवमान पूयसे ।
त्वामुशिजः प्रथमा अगृभ्णत तुभ्येमा
विश्वा भुवनानि येमिरे ॥ ३० ॥ १७ ॥

त्वं । पवित्रे । रजसः । विऽधर्मणि । देवेभ्यः । सोम । पवमान । पूयसे । त्वां । उशिजः । प्रथमाः । अगृभ्णत । तुभ्यं । इमा । विश्वा । भुवनानि । येमिरे ।

पदार्थ—( त्वं ) पूर्वोक्तस्त्वं ( पवित्रे, विधर्म्मणि ) स्वपूतस्वरूपे ( देवेभ्योरजसः ) दिव्यगुणयुक्तरजोगुणस्य परमाणुभिरिदंजगदुत्पादयसि । ( सोम ) हे परमात्मन् ( पवमान ) निखिलपवित्रकर्त्तः त्वं ( पूयसे ) पवित्रयसि । ( त्वामुशिजः ) पूर्वोक्तं त्वां विज्ञानिनः प्रथमं ( अगृभ्णत ) अग्रहीषुः । ( तुभ्य, इमाः ) तुभ्यमिमानि ( विश्वा, भुवनानि ) निखिललोकलोकान्तराणि ( येमिरे ) आत्मानंसमर्पयन्ति ।

पदार्थ—( त्वं ) तुम ( पवित्रेविधर्म्मणि ) अपने पवित्र स्वरूप में ( देवेभ्यो रजसः ) दिव्यगुणयुक्त रजोगुणके परमाणुओं से इस संसार को उत्पन्न करते हो । ( सोम ) हे परमात्मन् ( पवमानः ) सबको पवित्र करनेवाले ( पूयसे ) तुम पवित्र करते हो । ( त्वामुशिजः ) तुमको विज्ञानी लोगों ने( प्रथमाः ) पहले ( अगृभ्णत ) ग्रहण किया । ( तुभ्यइमाः ) तुम्हारे लिये ये ( विश्वाभुवनानि ) सम्पूर्णलोकलोकान्तर ( येमिरे ) अपने आपको समर्पित करते हैं ।

भावार्थ—परमात्माही सम्पूर्ण लोक लोकान्तरों की उत्पत्ति का कर्ता है । और उसीकी विभूतिको सवलोकलोकान्तर प्रदीप्त कर रहे हैं ।

प्र रेभ एत्यति वारमव्ययं वृषा
वनेष्ववं चक्रदद्धरिः ।
सं धीतयो वावशाना अनूषत शिशुं
रिहन्ति मतयः पनिप्नतम् ॥ ३१ ॥

प्र । रेभः । एति । अति । वारं । अव्ययं । वृषा । वनेषु । अव । चक्रदत् । हरिः । सं । धीतयः । वावशानाः । अनूषत । शिशुं । रिहंति । मतयः । पनिप्नतं ॥ ३१ ॥

पदार्थः—(रेभः) शब्दब्रह्माश्रयः परमात्मा (वारमव्ययम्) वरणीयमुपासकं ( प्र, अत्येति ) सर्वप्रकारेण संगच्छति । यः परमात्मा ( वृषा ) बलानि ददाति । ( सः, हरिः ) स सर्वस्य सत्तायां लीनः परमात्मा ( वनेषु ) उपासनासु ( अव, चक्रदत् )

शब्दायमानोभवति ( धीतयः ) उपासकाः ( वावशानाः ) तस्योपासनासु मग्नाः सन्तः (समनषत) सर्वप्रकारैः, तं स्तुवन्ति। (पनिप्नतं) शब्दब्रह्मणो निदानं ब्रह्म यत् (शिशुम्) सर्वस्य लक्ष्यस्थानमस्ति तत् (मतयः) बुद्धिमन्तः (रिहन्ति) साक्षात्कारं कुर्वन्ति ।

**पदार्थ**—( रेभः ) शब्दब्रह्मका आधार परमात्मा ( वारमव्ययं ) वरणीय उपासकको ( प्र, अत्येति भलीभांति प्राप्त होता है । जो परमात्मा ( वृषा ) बलोंका दाता है ( स हरिः ) वह सबको स्वसत्ता में लीन करने वाला परमात्मा ( वनेषु ) उपासनाओंमें ( अवचक्रदत् ) शब्दायमान होता है ( धीतयः ) उपासक लोग ( वावसानाः ) उसकी उपासनामें मग्न हुए हुये ( समनूषत ) भलीभाँति उसकी स्तुति करते हैं । ( पनिप्नतम् ) उस शब्द ब्रह्मके आदि कारण ब्रह्मको जो ( शिशुं ) सबका लक्ष्य स्थान है । उसको ( मतयः ) सुमति लोग ( रिहन्ति ) साक्षात्कार करते हैं ।

**भावार्थ**—जो लोग चित्तवृत्तिको अन्य प्रवाहोंसे हटाकर एक मात्र परमात्माका ध्यान करते हैं । वही परमात्माको भलीभाँति साक्षात्कार करते हैं । अन्य नहीं ॥ ३१ ॥

स सूर्यस्य रश्मिभिः परि व्यत<br>
तन्तुं तन्वानस्त्रिवृतं यथा विदे ।<br>
नयन्नृतस्य प्रशिषो नवीयसीः<br>
पतिर्जनीनामुप याति निष्कृतम् ॥ ३२ ॥

सः । सूर्यस्य । रश्मिऽभिः । परि । व्यत । तंतुं । तन्वानः । त्रिऽवृतं । यथा । विदे । नयन् । ऋतस्य । प्रऽशिषः । नवीयसीः । पतिः । जनीनां । उप । याति । निःऽकृतं ॥

पदार्थः—स परमात्मा ( यथाविदे ) सत्यज्ञानिने ( त्रिवृतं ) त्रिधा ब्रह्मचर्य्यं ( तन्वानः ) विस्तारयन् ( तन्तुंपरिव्यत ) सन्ततिरूपतन्तुं विस्तारयति ( सः ) अपि च सपरमात्मा (सूर्य्यस्य रश्मिभिः) सूर्य्यकिरणैः प्रकाशयन् ( ऋतस्य प्राशिषः ) सत्यस्य प्रशंसा ( नवीयसीः ) यानित्यनूतनाऽस्ति तां ( नयन् ) प्राप्नुवन् ( जनीनां ) मानवानां ( निष्कृतं ) संस्कृतमन्तःकरणं ( उपयाति ) प्राप्नोति । ( पतिः ) स एव परमात्मा अस्य निखिलब्रह्माण्डस्येश्वरोऽस्ति ।

पदार्थ—वह परमात्मा ( यथाविदे ) यथार्थज्ञानीके लिये ( त्रिवृतं ) ३–प्रकार के ब्रह्मचर्य्य को ( तन्वानः ) विस्तार करता हुआ ( तन्तुं परिव्यत ) सन्ततिरूप तन्तुका विस्तार करता है । ( सः ) और वह परमात्मा ( सूर्य्यस्य रश्मिभिः ) सूर्य्यकी किरणों द्वारा प्रकाश करता हुआ ( ऋतस्य प्राशिषः ) सच्चाई की प्रशंसा ( नवीयसीः ) जो कि नित्य नूतन है। उसको ( नयन् ) प्राप्त कराता हुआ ( जनीनां ) मनुष्यों के ( निष्कृतं ) संस्कृत अन्तःकरणको ( उपयाति ) प्राप्त होता है। (पतिः) वही परमात्मा इस सम्पूर्ण ब्रह्माण्ड का पति है ।

भावार्थः—परमात्मा इस संसार में प्रथम मध्यम उत्तम ३–प्रकारके ब्रह्मचर्य्य की मर्यादा को निर्माण करता है। उन कृतब्रह्मचर्य्य पुरुषों से शुभसन्ततिका प्रवाह संसार में प्रचलित होता है ॥ ३२ ॥

राजा सिन्धूनां पवते पतिर्दिव ऋतस्य
याति पथिभिः कनिक्रदत् ।
सहस्रधारः परि षिच्यते हरिः
पुनानो वाचं जनयन्नुपावसुः ॥ ३३ ॥

राजा । सिंधूनां । पवते । पतिः । दिवः । ऋतस्य । याति । पथिऽभिः । कनिक्रदत् । सहस्रऽधारः । परि । सिच्यते । हरिः । पुनानः । वाचं । जनयन् । उपऽवसुः ॥

पदार्थः—( हरिः ) परमात्मा ( पुनानः ) सर्वं पवित्रयन् ( वाचं जनयन् ) वेदवाणीमुत्पादयन् किम्भूतः ( उपावसुः ) सर्वधनानामाधारः ( परिषिच्यते ) विद्वद्भिरुपास्यते ( सहस्रधारः ) सोऽनन्तशक्तिमान् अस्ति । अन्यच्च ( सिन्धूनां राजा ) स्यन्दनशीलनिखिलपदार्थानां राजाऽस्ति । अपिच ( दिवःपतिः ) द्युलोकस्य पतिः ( ऋतस्य, पथिभिः ) सत्यमार्गैः ( कनिक्रदत् ) शब्दायमानः परमात्मा ( याति ) निजभक्तान् गच्छति । तथा ( पवते ) तान् पवित्रयति ।

पदार्थ—( हरिः ) परमात्मा (पुनानः) सब को पवित्र करता हुआ ( वाचं जनयन् ) वेदरूपी वाणी को उत्पन्न करता हुआ ( उपावसुः ) सब धनों का आधार ( परिषिच्यते ) विद्वानों द्वारा उपासना किया जाता है । ( सहस्रधारः ) वह अनन्तशक्तिमान् है । ( सिन्धूनांराजा ) और स्यन्दनशील सब पदार्थों का राजा है और (दिवः) द्युलोक का ( पतिः ) पति है । ( ऋतस्य पथिभिः ) सच्चाई की रास्तों से ( कनिक्रदत् ) वह शब्दायमान ब्रह्म ( याति ) अपने भक्तों की गति करता है । तथा ( पवते ) उनको पवित्र करता है ।

भावार्थ—परमात्मा अपनी वेदरूपी वाणी को उत्पन्न करके सदा उपदेश करता है । परमात्मानुयायी पुरुषों को चाहिये कि उसकी आज्ञानुसार अपना जीवन बनावें ॥ ३३ ॥

पवमान मह्यर्णो वि धावसि सूरो न
चित्रो अव्ययानि पव्यया ।
गभस्तिपूतो नृभिरद्रिभिः सुतो महे
वाजाय धन्याय धन्वसि ॥ ३४ ॥

पवमान । महि । अर्णः । वि । धावसि । सूरः । न । चित्रः । अव्ययानि । पव्यया । गभस्तिऽपूतः । नृऽभिः । अद्रिऽभिः । सुतः । महे । वाजाय । धन्याय । धन्वसि ॥

पदार्थः—( पवमान ) हे सर्वपावकपरमात्मन् ! त्वं ( मह्यर्णः ) गतिस्वरूपोऽसि अपिच ( विधावसि ) स्वगत्या सर्वं गमयसि । ( सूरः, न ) सूर्य्यो यथा ( चित्रः ) अनेकवर्ण-विशिष्टान् ( अव्ययानि ) रक्षायुक्तपदार्थान् ( पव्यया ) स्वशक्त्या पवित्रयति एवं ( गभस्तिपूतः ) भवत्तेजोभिः पव-मानाः भवदुपासका भवत उपासनां कुर्वन्ति । ( अद्रिभिर्नृभिः ) भवत्साक्षात्कारिकाभिश्चित्तवृत्तिभिः ( सुतः ) साक्षात्कृत-स्त्वं ( महे, वाजाय ) महैश्वर्य्याय अन्यच्च ( धन्याय ) धनाय ( धन्वसि ) ऐश्वर्य्यप्रदो भवसि ।

पदार्थ—( पवमान ) हे सबको पवित्र करनेवाले परमात्मन् ! आप ( मह्यर्णः ) गतिस्वरूपहो ( विधावसि ) अपनी गतिसे सबको गमन कराते हैं । ( सूरः न ) जैसे सूर्य्य ( चित्रः ) नानावर्णविशिष्ट ( अव्ययानि ) रक्षायुक्तपदार्थोंको ( पव्यया ) अपनी शक्तिसे पवित्र

करते हैं । इसी प्रकार ( गभस्तिपूतः ) आपकी रोशनीसे पवित्र हुए आपके उपासक ( अद्रिभिर्नृभिः ) आपको साक्षात्कार करनेवाली चित्तवृत्तियों द्वारा ( सुतः ) आपकी उपासना करते हैं ( महे-वाजाय ) तब आप बडे ऐश्वर्यके लिये और (धन्याय) धनके लिये (धन्वासि) ऐश्वर्य्यप्रद होते हैं ।

भावार्थ—जिस प्रकार सूर्य्य अपनी किरणों द्वारा स्वाश्रित पदार्थों को प्रकाशित करता है । इसी प्रकार परमात्मा अपनी ज्ञानशक्तिसे अपने भक्तोंका प्रकाशक है ॥ ३४ ॥

इषमूर्जं पवमानाभ्यर्षसि श्येनो
न वंसु कलशेषु सीदसि ।
इन्द्राय मद्वा मद्यो मदः सुतो दिवो
विष्टम्भ उपमो विचक्षणः ॥ ३५ ॥ १८ ॥

इषं । उर्जं । पवमान । अभि । अर्षसि । श्येनः । न । वंसु । कलशेषु । सीदसि । इंद्राय । मद्वा । मद्यः । मदः । सुतः । दिवः । विष्टंभः । उपऽमः । विऽचक्षणः ॥

पदार्थः—( पवमान ) हे सर्वपावकपरमात्मन् ! त्वं ( इषं ) ऐश्वर्य्यमपिच ( ऊर्जं ) बलं ( अभ्यर्षसि ) ददासि श्येनो, (न) यथा विद्युत् ( वंसु, कलशेषु ) निवासयोग्यस्थानेषु स्थिता भवति, तथैव ( सीदसि ) त्वं पवित्रेऽन्तःकरणे स्थिरो भवासि । ( इन्द्राय ) कर्म्मयोगिने ( मद्वा ) आनन्दकर्ता

( मद्यः ) आनन्दहेतुः ( मदः ) अपिचानन्दस्वरूपोऽसि ( सुतः ) स्वयंसिद्धः ( दिवो, विष्टम्भः ) द्युलोकस्याश्रयः अपरञ्च ( उपमः ) द्युलोकस्योपमायोग्यः किञ्च ( विचक्षणः ) सर्वोपरिप्रवक्ता असि ।

**पदार्थ**—( पवमान ) हे सबको पवित्र करनेवाले परमात्मन् आप ( इषं ) ऐश्वर्य्य और ( ऊर्जं ) वलको ( अभ्यर्षसि ) देते हैं । ( श्येनो न ) जिस प्रकार बिजली ( वंसुकलशेषु ) निवास योग्य स्थानोंमें स्थिर होती है । इसी प्रकार ( सीदासि ) आप पवित्र अन्तःकरणोंमें स्थिर होते हैं । ( इन्द्राय ) आप कर्म्मयोगीके लिये ( मद्वा ) आनन्द करनेवाले ( मद्यः ) और आनन्दके हेतु हैं । ( मदः ) स्वयं आनन्दस्वरूप हैं । ( सुतः ) स्वयं सिद्ध हैं । (दिवो विष्टम्भः) द्युलोकके आधार हैं । (उपमः) और द्युलोककी उपमावाले हैं । ( विचक्षणः ) सर्वोपरिप्रवक्ता हैं ।

**भावार्थ**—परमात्मा द्युभ्वादि लोकोंका आधार है । और उसी के आधार में चराचर सृष्टिकी स्थिति है । और वेदादि विद्याओंका प्रवक्ता होनेसे वह सर्वोपरि विचक्षण है ॥ ३५ ॥

सप्त स्वसारो अभि मातरः शिशुं
नवं जज्ञानं जेन्यं विपश्चितम् ।
अपाङ्गन्धर्वं दिव्यं नृचक्षसं
सोमं विश्वस्य भुवनस्य राजसे ॥ ३६ ॥

सप्त । स्वसारः । अभि । मातरः । शिशुं । नवं । जज्ञानं ।

जेन्यं । विपःऽचितं । अपां । गंधर्वं । दिव्यं । नृऽचक्षसं । सोमं । विश्वस्य । भुवनस्य । राजसे ॥

पदार्थः—( सप्तस्वसारः ) ज्ञानेन्द्रियाणा सप्तच्छिद्रैः गामिन्य इन्द्रियाणां सप्तवृत्तयः ( अभिमातरः ) याःज्ञानयोग्यपदार्थप्रमाणितं कुर्वन्ति ताः ( शिशुं ) सर्वोपास्यपरमात्मानं ( नवं ) नित्यनूतनं पुनः किम्भूतं ( यज्ञानं ) स्फुटं किञ्च । ( जेन्यं ) सर्वजेतारं पुनः ( विपश्चितं ) सर्वोपरि विज्ञानिनमेवम्भूतं तं विषयं कुर्वन्ति । अपिच परमात्मा ( अपां ) जलानां अपिच ( गन्धर्वं ) पृथिव्या धारणकर्ता अस्ति । ( दिव्यं ) प्रकाशमानः अपिच ( नृचक्षसं ) सर्वान्तर्याम्यस्ति । ( सोमं ) सर्वोत्पादकश्चास्ति । तं (विश्वस्य, भुवनस्य राजसे) अखिलभुवनानां ज्ञानाय विद्वांस उपसेवन्ते ।

पदार्थ—( सप्त स्वसारः ) ज्ञानेन्द्रियोंके सप्त छिद्रोंसे गति करनेवाली इन्द्रियोंकी ७ वृत्तियें ( अभिमातरः ) जो ज्ञान योग्य पदार्थको प्रमाणित करती हैं । वे ( शिशुं ) सर्वोपास्यपरमात्माको ( नवं ) जो नित्य नूतन है । ( यज्ञानं ) और स्फुट है ( जेन्यं ) सबका जेता ( विपश्चितं ) और सबसे बड़ा विज्ञानी है । उसको विषय करती हैं । जो परमात्मा ( अपां ) जलोंका ( गन्धर्वं ) और पृथिवीका धारण करनेवाला है । ( दिव्यं ) दिव्य है । ( नृचक्षसं ) सर्वान्तर्य्यामी है ( सोमं ) सर्वोत्पादक है । उसकी ( विश्वस्य भुवनस्य राजसे ) सम्पूर्ण भुवनोंके ज्ञानके लिये विद्वान लोग उपासना करते हैं ।

भावार्थ—परमात्माका ध्यान इसलिये कियाजाता है कि परमात्मा अपहतपाप्मादि गुणोंको देकर उपासकको भी दिव्य दृष्टि दे । ताकि

उपासक लोकलोकान्तरोंके ज्ञानको उपलब्ध कर सके। इसी अभिप्रायसे योग-में लिखा है कि 'भुवनज्ञानं सूर्य्ये संयमात्' परमात्मामें चित्तवृत्तिका निरोध करनेसे लोकलोकान्तरोंका ज्ञान होता है ॥ ३६ ॥

ईशान इमा भुवनानि वीयसे
युजान इन्दो हरितः सुपर्ण्यः ।
तास्ते क्षरन्तु मधुमद्घृतं पय-
स्तव व्रते सोम तिष्ठन्तु कृष्टयः ॥ ३७ ॥

ईशानः । इमा । भुवनानि । वि । ईयसे । युजानः । इंदो इति । हरितः । सुऽपर्ण्यः । ताः । ते । क्षरंतु । मधुऽमत् । घृतं । पयः । तव । व्रते । सोम । तिष्ठंतु । कृष्टयः ।

पदार्थः—( इन्दो ) हे प्रकाशस्वरूपपरमात्मन् ! ( ईशानः ) त्वमीश्वरोऽसि । ( इमा, भुवनानि ) इमान्यखिलानि भुवनानि ( वीयसे ) चालयसि । ( हरितः ) हरणशीलशक्तयः ( सुपर्ण्यः ) याश्चेतनास्सन्ति ताः योजयसि । ( ताः ) पूर्वोक्ताः ( ते ) तव शक्तयः ( मधुमद्घृतं ) मधुरप्रेम मह्यं ( क्षरन्तु ) परिवाहयन्तु । अपिच ( पयः ) दुग्धादिस्निग्धपदार्थान् ददतु । ( सोम ) हे परमात्मन् ! ( तव व्रते ) तव नियमे ( कृष्टयः ) सर्वे मानवाः ( तिष्ठन्तु ) स्थिता भवन्तु ।

पदार्थ—( इन्दो ) हे प्रकाशस्वरूपपरमात्मन् ! ( ईशानः ) आप ईश्वर हैं । ( इमा भुवनानि ) इन सब भुवनोंको ( वीयसे ) चलाते हैं ।

( हरितः ) हरणशीलशक्तियें ( सुपर्ण्यः ) जो चेतन हैं । उनको ( युजानः ) नियुक्त करते हैं । ( ताः ) वे ( ते ) तुम्हारी शक्तियें ( मधुमद्घृतं ) मीठा प्रेम हमारे लिये ( क्षरन्तु ) वहायें । ( पयः ) और दुग्धादि स्निग्ध पदार्थों का प्रदान करें । ( सोम ) हे परमात्मन् ! ( तव व्रते ) तुम्हारे नियममें ( कृष्टयः ) सब मनुष्य ( तिष्ठन्तु ) स्थिर रहें ।

भावार्थ—इस मन्त्रमें परमात्माके नियममें स्थिर रहनेका वर्णन है जैसा कि ( अग्ने व्रतपते व्रतं चरिष्यामि ) इत्यादि मन्त्रोंमें व्रतकी प्रार्थना है यहां भी परमात्माके नियमरूपव्रतके परिपालनकी प्रार्थना है ।

त्वं नृचक्षा असि सोम विश्वतः
पवमान वृषभ ता वि धावसि ।
स नः पवस्व वसुमद्धिरण्यवद्वयं
स्याम भुवनेषु जीवसे ॥ ३८ ॥

त्वं । नृऽचक्षाः । असि । सोम । विश्वतः । पवमान । वृषभ । ता । वि । धावसि । सः । नः । पवस्व । वसुऽमत् । हिरण्यऽवत् । वयं । स्याम । भुवनेषु । जीवसे ॥

पदार्थः—( सोम ) हेपरमात्मन् ! ( त्वं ) पूर्वोक्तस्त्वं ( नृचक्षाः, असि ) मानवेभ्यः कर्म्मणां पृथक् २ फलं ददासि । अपिच (पवमान) हेपरमात्मन् ( विश्वतः ) सर्वतः ( वृषभ ) अनन्तशक्तियुक्तोऽसि । ( ता, विधावसि ) ताभिः शक्तिभिस्त्वंमां परिशोधय ( सः ) तच्छक्तियुक्तस्त्वं [ नः ] अस्मान्

(पवस्व) पवित्रय ( वसुमत् ) ऐश्वर्य्यवान् ( हिरण्यवत् ) सप्रकाशोऽसि । ( वयं ) वयं ( भुवनेषु ) अस्मिन् संसारे (जीवसे) जीवनाय ( स्याम ) उक्तैश्वर्य्ययुक्ता भवाम ।

पदार्थ—( सोम ) हे परमात्मन् । ( त्वं ) तुम ( नृचक्षाः असि ) मनुष्योंके कर्म्मोंके भिन्न २ फल देनेवाले हो और ( पवमान ) हे पवित्र करनेवाले ( विश्वतः ) सब प्रकारसे ( वृषभ ) हे अनन्तशक्तियुक्त परमात्मन् (ता विधावसि) उन शक्तियोंसे आप हमको शुद्ध करें ( सः ) उक्तशक्तियुक्त आप ( नः ) हमको ( पवस्व ) पवित्र करें । आप ( वसुमत् ) ऐश्वर्य्यवाले और । ( हिरण्यवत् ) प्रकाशवाले हैं । ( वयं ) हम ( भुवनेषु ) इस संसारमें ( जीवसे ) जीनेके लिये ( स्याम ) उक्त ऐश्वर्य्ययुक्त हों ।

भावार्थ—इस मन्त्रमें परमात्माको कर्मोंके साक्षीरूपसे वर्णन किया है ।

गोवित्पवस्व वसुविद्धिरण्य-
विद्रेतोधाइन्दो भुवनेष्वर्पितः ।
त्वं सुवीरोअसि सोम विश्ववित्तं
त्वा विप्रा उप गिरेम आसते ॥ ३९ ॥

गोऽवित् । पवस्व । वसुऽवित् । हिरण्यऽवित् । रेतःधाः । इंदो इति । भुवनेषु । अर्पितः । त्वं । सुऽवीरः । असि । सोम । विश्वऽवित् । तं । त्वा । विप्राः । उप । गिरा । इमे । आसते

पदार्थः—(इन्दो) हे प्रकाशस्वरूपपरमात्मन्! [ गोवित् ] त्वं विज्ञान्यसि । ज्ञानेन मां ( पवस्व ) पवित्रय । ( वसुवित् )

ऐश्वर्य्यसम्पन्नोऽसि । ऐश्वर्य्येण मां पवित्रय । ( हिरण्यवित् ) प्रकाशस्वरूपोऽसि प्रकाशेन मां पवित्रय । ( रेतोधाः ) त्वं प्रजाया बीजरूपसामर्थ्यं दधासि । अन्यच्च ( भुवनेषु, अर्पितः ) निखिलजगति व्याप्तोऽसि । ( त्वं ) पूर्वोक्तस्त्वं ( सुवीरोऽसि ) सर्वोपरि बलयुक्तोऽसि । ( सोम ) हे सर्वोत्पादक ! ( विश्वावित् ) सर्वज्ञाताचासि । ( तं त्वां ) पूर्वोक्तं त्वां ( विप्राः ) विद्वांसः ( उपगिरेम ) उपासीनाः ( आसते ) तिष्ठन्ति ।

पदार्थः—( इन्दो ) हे प्रकाशस्वरूपपरमात्मन् ! ( गोवित् ) आप विज्ञानी हैं । ज्ञान से ( पवस्व ) हमको पवित्र करें ! ( वसुवित् ) ऐश्वर्य्यसे सम्पन्न हैं ऐश्वर्य्यसे हमको पवित्र करें । ( हिरण्यवित् ) प्रकाशस्वरूप हैं प्रकाशसे हमको पवित्र करें ) ( रेतोधाः ) आप प्रजाके बीजस्वरूप सामर्थ्य-को धारण करनेवाले हैं । ( भुवनेषु अर्पितः ) और सब संसारमें व्याप्त हैं । ( त्वं ) तुम ( सुवीरोऽसि ) सर्वोपरि बलयुक्त हो । ( सोम ) सर्वोत्पादक हो ( विश्ववित् ) सर्वज्ञाता हो । ( तं त्वां ) उक्तगुणयुक्त आपको ( विप्राः ) विद्वान्लोग ( उपगिरेम ) उपासना करते हुए ( आसते ) स्थित होते हैं ।

भावार्थः—इस मन्त्रमें परमात्माको ज्ञान, प्रकाश और क्रिया इत्यादि अनन्तगुणोंके आधाररूपसे वर्णन किया है, कि इसी आशयको लेकर ( स्वाभाविकी ज्ञान बल क्रिया ) इत्यादि उपनिषद्वाक्योंमें परमात्माको ज्ञान बल क्रिया का आधार वर्णन किया है ।

उन्मध्वं ऊर्मिर्वननां अतिष्ठिपदपो
वसानो महिषो वि गाहते ।
राजा पवित्ररथो वाजमारुह-
त्सहस्रभृष्टिर्जयति श्रवो बृहत् ॥ ४० ॥'१९

उत् । मध्वः । ऊर्मिः । वननाः । अतिस्थिपत् । अपः । वसानः । महिषः । वि । गाहते । राजा । पवित्रऽरथः । वाजं । आ । अरुहत् । सहस्रऽभृष्टिः । जयति । श्रवः । बृहत् ।

पदार्थ—( मध्वः ) मधुरां ( ऊर्मिर्वननाः ) तरङ्गवतीं वेदवाणीं ( उदतिष्ठिपत् ) त्वमाश्रयसि । तथा ( राजा ) त्वं सर्वप्रकाशकः (पवित्ररथः) पवित्रगतिमाँश्चासि । तथा (वाजमारुहत्) एश्वर्य्यशक्तिमाश्रयसि । अपिच ( सहस्रभृष्टिः ) अनन्तशक्तिभिरस्य संसारस्य पालनं करोषि । तथा (बृहच्छ्रवः) महाशक्तिमानासि । अपरश्च ( जयति ) सर्वोत्कृष्टत्वेन वर्तसे ! उक्तगुणसम्पन्नस्त्वा ( अपो वसानः ) कर्मयोगी ( महिषः ) महापुरुष ( विगाहते ) साक्षात्करोति ।

पदार्थ—( मध्वः ) मीठी ( ऊर्मिर्वननाः ) लहरोंवाली वेदवाणी ( उदतिष्ठिपत् ) तुम आश्रय किये हो । तथा ( राजा ) तुम सबको प्रकाश देनेवाले हो । और ( पवित्ररथः ) आप पवित्रगतिवाले हैं । तथा ( वाजमारुहत् ) ऐश्वर्यरूपीशक्तिको आश्रय किये हुए हो । और ( सहस्रभृष्टिः ) अनन्तशक्तियोंसे इस संसारको पालन करनेवाले हो । तथा ( बृहच्छ्रवः ) बड़ेयशवाले हो । और (जयति) सर्वोत्कृष्टतासे वर्तमान हो । उक्तगुणसम्पन्न आपको ( अपोवसानः ) कर्म्मयोगी ( महिषः ) महापुरुष ( विगाहते ) साक्षात्कार करता है ।

भावार्थ—महिषशब्दके अर्थ यहां महापुरुषके हैं । महिष इति महन्नामसु पठितम् । नि० अ० । ३ । खं० १३ ॥ महिष यह निरुक्तमें महत्वका वाचक है महापुरुष यहां कर्मयोगी और ज्ञानयोगीको माना है उक्त

पुरुषोंमें महत्व परमात्माके सद्गुणोंके धारण करनेसे आता है इसीलिये इनको महापुरुष कहा है ।

स भन्दना उदियर्ति प्रजावती
विश्वायुर्विश्वाः सुभरा अहर्दिवि ।
ब्रह्म प्रजावद्रयिमश्वपस्त्यं पीत
इन्दविन्द्रमस्मभ्यं याचतात् ॥ ४१ ॥

सः । भंदनाः । उत् । इयर्ति । प्रजाऽवतीः । विश्वऽआयुः । विश्वाः । सुऽभराः । अहःऽदिवि । ब्रह्म । प्रजाऽवत् । रयिं । अश्वऽपस्त्यं । पीतः । इंदो इति । इंद्रं । अस्मभ्यं । याचतात् ॥

पदार्थ--( सः ) पूर्वोक्तः कर्म्मयोगी ( भन्दनाः ) वन्दनां ( उदियर्ति ) करोति । या वन्दना ( अहर्दिवि ) सन्ततं ( प्रजावतीः ) शुभप्रजादायिका तथा ( विश्वायुः ) अखिलायुर्दायिका । अपरञ्च ( विश्वाः ) सर्वप्रकारायाः ( सुभराः ) पूर्तेःकारिका चास्ति । ( ब्रह्म ) वेदः ( प्रजावत् ) यः सदुपदेशैः शुभप्रजाः अपिच ( रयिं ) धनं ( अश्व, पस्त्यं ) अन्यगतिशीलपदार्थांश्च ददाति । ( पीतः ) सततं तृप्तस्त्वं ( इन्दो ) हे प्रकाशस्वरूपपरमात्मन् ! ( इन्द्रं ) कर्म्मयोगिनं तथा ( अस्मभ्यं ) मह्यं उक्तैश्वर्य्यं ( याचतात् ) देहि ।

पदार्थ—( सः ) पूर्वोक्तकर्मयोगी ( भन्दनाः ) वन्दना ( उदियर्ति ) करता है जो वन्दना ( अहर्दिवि ) सर्वदा ( प्रजावतीः ) शुभ-

प्रजाको देनेवाली है, तथा (विश्वायुः) सम्पूर्णआयुको देनेवाली है। और (विश्वाः) सब प्रकारकी (सुभराः) पूर्तियोंकी करनेवाली है। (ब्रह्म) वेद (प्रजावत्) जो सदुपदेशद्वारा शुभप्रजाओंको देने वाला है और (रयिं) धन और (अश्वपस्त्यं) अन्य गतिशीलपदार्थोंको देनेवाला है। (पीतः) नित्यतृप्त (इन्दो) हे प्रकाशस्वरूपपरमात्मन्। आप (इन्द्रं) कर्मयोगीको तथा (अस्मभ्यं) हमारे लिये उक्तऐश्वर्य (याचतात्) दें।

भावार्थ—इस मन्त्र में ऐश्वर्य्य की प्रार्थना करते हुए वेदोंके सदुपदेशरूपी महत्व का वर्णन किया है।

सो अग्रे अह्नां हरिर्हर्यतो मदः
प्र चेतसा चेतयते अनु द्युभिः।
द्वा जना यातयन्नन्तरीयते नरा
च शंसं दैव्यं च धर्तरि ॥ ४२ ॥

सः। अग्रे। अह्नां। हरिः। हर्यतः। मदः। प्र। चेतसा चेतयते। अनु। द्युऽभिः। द्वा। जना। यातयन्। अंतः। ईयते। नराशंसं। च। दैव्यं। च। धर्तरि ॥

पदार्थः—(सः सोमः) उक्तगुणसम्पन्नपरमात्मा (अह्नामग्रे) अस्मादहर्दिवात्प्राक् (हर्य्यतो हरिः) हारकशक्तीनां हरणकारकः। (मदः) आनन्दस्वरूपः (अनुद्युभिः) द्युभ्वादि लोकानां (चेतसा) निज चैतन्यरूपशक्त्या (प्रचेतयते) गतिशीलकारकश्चासीत्। (द्वाजना) कर्म्मयोगिनां ज्ञानयोगिनाञ्च

( यातयन् ) वेदविधिना प्रेरणां कृत्वा ( अन्तरीयते ) अस्य द्युलोकस्यापिच । पृथिवीलोकस्य मध्ये गतिशीलोऽस्ति । ( च ) पुनः ( नरा ) उक्तपुरुषद्वयं ( शंसं ) प्रशंसनीयं ( दैव्यं ) दिव्यं च ( धर्तरि ) धारणविषये सर्वोपरि निर्ममे ।

**पदार्थ**—( सः सोमः ) उक्तगुणसम्पन्नपरमात्मा ( अह्नामग्रे ) इस दिनरातसे पहले ( हर्यतोहरिः ) हरण करनेवाली शक्तियोंका हरण करनेवाला था । ( मदः ) आनन्दस्वरूप था । और ( अनुद्युभिः ) द्युभ्वादिलोकोंको ( चेतसा ) अपनी चैतन्यरूपशक्तिसे ( प्रचेतयते ) गतिशील करनेवाला था ( द्वाजना ) कर्मयोगी और ज्ञानयोगी दोनों पुरुषोंको ( यातयन् ) वेदविधिसे प्रेरणा करके ( अन्तरीयते ) इस द्युलोक और पृथिवीलोकके मध्यमें गतिशील है ( च ) और ( नरा ) उक्त दोनों पुरुषोंको ( शंसं ) प्रशंसनीय ( दैव्यं ) दिव्य ( च ) और ( धर्तरि ) धारणाविषयमें सर्वोपरि बनाता है ॥

**भावार्थ**—वह परमात्मा इस प्रकृतिकी नानाविधशक्तियोंको संयोजन करता हुआ कर्मयोगी और ज्ञानयोगी दोनों प्रकारके पुरुषोंको प्रशंसनीय बनाता है ॥

अञ्जते व्यञ्जते समञ्जते
क्रतुं रिहन्ति मधुनाभ्यञ्जते ।
सिन्धोरुच्छ्वासे पतयन्तमुक्षणं
हिरण्यपावाः पशुमासु गृभ्णते ॥ ४३ ॥

अंजते । वि । अंजते । सं । अंजते । क्रतुं । रिहंति ।

मधुंना। अभि। अंजते। सिंधोंः। उत्ऽश्वासे। पतयंतं। उक्षणं। हिरण्यऽपावाः। पशुं। आसु। गृभ्णते॥

पदार्थः—( अञ्जते ) उक्तपरमात्मा निजज्ञानेन गतिहेतुरपिच ( व्यञ्जते ) पूर्वकृतकर्म्मभिः जीवानां विविध-जन्मना कारणं तथा ( समञ्जते ) स्वयं न्यायशीलो भूत्वा गमनहेतुश्चास्ति। अतः सम्यग्गतिकारकः ( क्रतुं ) यज्ञरूपञ्च परमात्मानं ( रिहन्ति ) उपासका गृह्णन्ति। यः परमात्मा ( मधुना ) निजानन्देन ( अभ्यञ्जते ) सर्वत्र प्रकटोऽस्ति। अन्यच्च ( सिन्धोरुच्छ्वासे ) यः सिन्धोरुच्चतरङ्गेषु ( पतयन्तं ) पतितः ( उक्षणं ) अपिच बलस्वरूपः ( हिरण्यपावाः ) सद-सद्विवेकी ( पशुं ) अन्यच्च यो ज्ञानदृष्ट्या पश्यति, तमुक्तपुरुषं परमात्मा ( आसु ) निजार्द्रभावेन अर्थात् कृपादृष्ट्या (गृभ्णते) गृह्णाति।

पदार्थः—(अञ्जते) उक्त परमात्मा अपने ज्ञान द्वारा गतिका हेतु है। और ( व्यञ्जते ) पूर्वकृत कर्मोंके द्वारा जीवोंके विविध प्रकारके जन्मोंका हेतु है। तथा ( समञ्जते ) स्वयं न्यायशील होकर गतिका हेतु है -इस-लिये सम्यग्गति करानेवाला कथन कियागया। और ( क्रतुं ) यज्ञरूप-परमात्माको ( रिहन्ति ) उपासकलोग ग्रहण करते हैं। जो परमात्मा ( मधुना ) अपने आनन्दसे ( अभ्यञ्जते ) सर्वत्र प्रगट है। और ( सि-न्धोरुच्छ्वासे ) जो सिन्धुकी उच्च लहरोंमें ( पतयन्तं ) गिरा हुआ मनुष्य है ( उक्षणं ) और बलस्वरूप है ( हिरण्यपावाः ) और सदसद्विवेकी है और ( पशुं ) जो ज्ञानदृष्टिसे देखता है "पशुः पश्यतेरिति निरुक्तम्" ३।१६

उक्त पुरुषको परमात्मा ( आसु ) अपने आर्द्रभावसे अर्थात् कृपादृष्टिसे ( गृभ्णते ) ग्रहण करता है ।

भावार्थ—परमात्मा पतितोद्धारक है जो पुरुष अपने मन्दकर्मोंसे गिरकर भी उद्योगी बना रहता है, परमात्मा उसका अवश्यमेव उद्धार करता है ।

विपश्चिते पर्वमानाय गायत
मही न धारात्यन्धो अर्षति ।
अहिर्नजूर्णामति सर्पति त्वच-
मत्यो न क्रीळन्नसरद्वृषा हरिः ॥ ४४ ॥

विपःऽचिते । पर्वमानाय । गायत । मही । न । धारा । अति । अंधः । अर्षति । अहिः । न । जूर्णा । अति । सर्पति । त्वचं । अत्यः । न । क्रीळन् । असरत् । वृषा । हरिः ॥

पदार्थः—हे ज्ञानिपुरुषाः ! ( विपश्चिते ) सर्वज्ञपरमात्मने ( पवमानाय ) यः सर्वपावकोस्ति । तस्मै त्वं ( गायत ) गानंकुरुत यः ( धारा, न ) धारेव ( मही ) महत् ( अत्यन्धः ) ऐश्वर्यं ( अर्षति ) ददाति । यदभिज्ञाय पुरुषः ( अहिः ) सर्पस्य ( जूर्णा, त्वचं, न ) जीर्णत्वचइव ( अतिसर्पति ) परित्यज्य गच्छति । ( अत्योन ) विद्युदिव ( क्रीळन् ) क्रीडन् ( असरत् ) सर्वत्र गतिशीलो भवति । अपि च ( वृषा ) सर्वान् कामान् वर्षति ( हरिः ) तथा सर्वाविपत्तीर्हरति ।

पदार्थ—हे ज्ञानीपुरुषो ! ( विपश्चिते ) सर्वज्ञपरमात्माके ( पवमानाय ) जो सबको पवित्र करनेवाला है, उसके लिये आप ( गायत ) गान करें जो ( धारा न ) धाराके समान ( मही ) बड़े ( अत्यन्धः ) ऐश्वर्यको ( अर्षति ) देनेवाला है। जिसको जानकर पुरुष ( अहिः ) सांपकी ( जूर्णा त्वचं न ) जीर्णत्वचाके समान ( अतिसर्पति ) त्याग कर गमन करता है ( अत्योन ) विद्युतके समान ( क्रीलन् ) क्रीडा करता हुआ ( असरत् ) सर्वत्र गतिशील होता है। और ( वृषा ) सब कामनाओंकी वृष्टि करता है ( हरिः ) तथा सब विपत्तियोंको हरलेता है।

भावार्थ—इस मन्त्रमें परमात्माकी उपासना का कथन किया-गया है कि, हे उपासकलोगो तुम उस सर्वज्ञपुरुषकी उपासना करो जो सर्वोपरि विज्ञानी और पतितोद्धारक है इस मन्त्रमें विपश्चित्, शब्द परमात्मा-के लिये आया है और पहिलेपहिल ( विपश्चित् ) शब्द मेधावीके लिये वेदमें ही आया है इसीका अनुकरण आधुनिक कोषोंमें भी किया-गया है।

अग्रेगो राजाप्यस्तविष्यते
विमानो अह्नां भुवनेष्वर्पितः ।
हरिर्घृतस्नुः सुदृशीको अर्णवो
ज्योतीरथः पवते राय ओक्यः ॥ ४५ ॥ २०

अग्रेऽगः । राजा । अप्यः । तविष्यते । विऽमानः । अन्हां । भुवनेषु । अर्पितः । हरिः । घृतऽस्नुः । सुऽदृशीकः । अर्णवः । ज्योतिःऽरथः । पवते । राये । ओक्यः ॥

पदार्थः— यः परमात्मा [अग्रेगः] सर्वाग्रगामी तथा [राजा]

सर्वस्य पतिः ( अप्यः ) सर्वगतश्चास्ति। ( तविष्यते ) स स्तूयते ( अह्नोविमानः ) अपिच सूर्य्यचन्द्रादीनां निर्माता, ( भुवनेषु, अर्पितः ) सर्वलोकेषु स्थिरः ( हरिः ) हरणशीलः, तथा ( घृतस्नु : ) प्रेमाभिलाषी, तथा (सुदृशीकः) सुन्दरः, अपिच (अर्णवः) सुखसमुद्रः, ( अपरञ्च (ज्योतीरथः) ( ज्योतिस्स्वरूपः (ओक्यः) सर्वस्य निवासस्थानञ्चास्ति । स परमात्मा ( राये ) ऐश्वर्य्याय ( पवते ) मां पवित्रयतु ॥

**पदार्थ**—जो परमात्मा ( अग्रेगः ) सबसे पहले गति करनेवाला है, तथा ( राजा ) सबका स्वामी है और ( अप्यः ) सर्वगत है (तविष्यते) वह स्तुति किया जाता है । ( अह्नोविमानः ) सूर्यचन्द्रमादिकोंका निर्माता है ( भुवनेष्वर्पितः ) सबलोकोंमें स्थिर है और ( हरिः ) हरणशील है तथा (घृतस्नुः ) प्रेमको चाहनेवाला है,तथा ( सुदृशीकः ) सुन्दर है । ( अर्णवः ) सुखोंका समुद्र हैं ( ज्योतीरथः )ज्योतिःस्वरूप है । और ( ओक्यः ) सबका निवासस्थान है वह परमात्मा ( राये ) ऐश्वर्यके लिये ( पवते ) हमें पवित्र करे ।

**भावार्थ**—इस मन्त्रमें परमात्माको सर्वाधिकरणरूपसे वर्णन किया है, जैसा कि (यस्मिन्विश्वानि भुवनानि तस्थुः) ऋ०।१०।१२।६। में यही वर्णन किया है कि सर्व लोकालोकान्तर उसीमें निवास करते हैं ।

असर्जि स्कम्भो दिव उद्यतो
मदः परि त्रिधातुर्भुवनान्यर्षति ।
अंशुं रिहन्ति मतयः पनिप्नतं गिरा
यदि निर्णिजमृग्मिणो ययुः ॥ ४६ ॥

असर्जि । स्कंभः । दिवः । उत्ऽयंतः । मदः । परि । त्रिऽधातुः । भुवनानि । अर्षति । अंशुं । रिहंति । मतयः । पनिप्नतं । गिरा । यदि । निःऽनिजं । ऋग्मिणः । ययुः ।

पदार्थः—यः परमात्मा ( दिवस्कम्भः ) द्युलोकस्याधारः अपि च ( त्रिधातुर्भुवनानि ) प्रकृतेस्त्रयाणां गुणानां कार्य्यभूतो यो लोकस्तं ( पर्य्यर्षति ) चालयति अपरञ्च ( मदः ) आनन्दस्वरूपस्तथा (उद्यतः) स्वसत्तया सदैव जीवितः जागरितश्चास्ति । ( असर्जि ) तेनेमानि लोकलोकान्तराणि विरचितानि । ( अंशुं ) तं गतिशीलं परमात्मानं ( मतयः ) बुद्धिमन्तः ( गिरा ) वेदवाण्या ( रिहन्ति ) साक्षात्कुर्वन्ति । कदा ? ( यदि ) यदा ( पनिप्नतं ) शब्दायमानं ( निर्निजं ) अमुं शुद्धस्वरूपं ( ऋग्मिणः ) स्तोतारस्तुत्या ( ययुः ) प्राप्नुवन्ति ।

पदार्थ—जो परमात्मा ( दिवःस्कम्भः ) द्युलोकका आधार है और ( त्रिधातुर्भुवनानि ) प्रकृतिके तीनों गुणोंके कार्य जो लोक हैं उनको ( पर्यर्षति ) चलानेवाला है । और ( मदः ) आनन्दस्वरूप है तथा ( उद्यतः ) अपनी सत्तासे सदैव जीवित जागृत है ( असर्जि ) उसने इन लोकलोकान्तरोंको रचा । ( अंशुं ) उस गतिशील ( पनिप्नतं ) शब्दायमान परमात्माको ( मतयः ) बुद्धिमान् ( गिरा ) वेदवाणी द्वारा (रिहन्ति) साक्षात्कार करते हैं । कब २ ( यदि ) जब २ ( निर्णिजं ) उस शुद्धस्वरूपको ( ऋग्मिणः ] स्तोता लोग स्तुति द्वारा ( ययुः ) प्राप्त होते हैं ।

भावार्थ—जब उपासक शुद्धभावसे उसका स्तवन करता है तो उसकी प्राप्ति अवश्यमेव होती है ।

प्र ते धारा अत्यण्वानि मेष्यः

पुनानस्य संयतो यन्ति रंहयः ।

यद्गोभिरिन्दो चम्वोः समज्यस आ

सुवानः सोम कलशेषु सीदसि ॥४७॥

प्र । ते । धाराः । अति । अण्वानि । मेष्यः । पुनानस्य । संऽयतः । यंति । रंहयः । यत् । गोभिः । इंदो इति । चम्वोः । संऽअज्यसे । आ । सुवानः । सोम । कलशेषु । सीदसि ॥

पदार्थः—( इन्दो ) हे प्रकाशस्वरूप परमात्मन् ! ( यद् ) यदा त्वं ( गोभिः ) ज्ञानिभिः (चम्वोः) सेनासम्बन्धे (समज्यसे) उपसेव्यसे तदा त्वं ( आसुवानः ) सर्वव्यापकः ( सोम ) हे शान्तस्वभावपस्मात्मन् ! ( कलशेषु ) उपासकानामन्तःकरणेषु ( सीदसि ) विराजसे अपिच ( ते धाराः ) तवप्रेमधाराः ( अत्यण्वानि ) याः सूक्ष्माः सन्ति । ( संयतः ) संयमिनं पुरुषं ( पुनानस्य ) यः सदुपदेशैः सर्वपावकोऽस्ति । तं ( यन्ति ) प्राप्नुवन्ति । याः प्रेमधाराः ( रंहयः ) गतिशीलास्सन्ति ।

पदार्थ—( इन्दो ) हे प्रकाशस्वरूपपरमात्मन ! ( यद् ) जब आप ( गोभिः ) ज्ञानीपुरुषोंद्वारा ( चम्वोः ) आध्यात्मिकवृत्तियोंकी सेना-के सम्बन्धमें ( समज्यसे ) उपासना कियेजाते हो तब आप ( आसुवानः ) । सर्वव्यापक (सोम) हे शान्तिस्वरूप परमात्मन् ! (कलशेषु) उपासकोंके अन्तः-करणोंमें ( सीदसि ) विराजमान होते हो । और ( ते धाराः ) तुम्हारी प्रेम की धारायें ( अत्यण्वानि ) जो सूक्ष्महैं ( संयतः ) संयमीपुरुषको (पुनानस्य)

जो सदुपदेशद्वारा सबको पवित्र करनेवाला है उसको (यन्ति) प्राप्त होती हैं जो प्रेमधारायें ( रंहयः ) गतिशील हैं ॥

भावार्थ—जब उपासक बाह्यवृत्तियोंका निरोध करके अन्तर्मुख होकर परमात्माका ध्यान करता है तो वह परमात्माके साक्षात्कारको अवश्य-मेव प्राप्त होता है ।

पवस्व सोम क्रतुविन्न उक्थ्योऽव्यो
वारे परि धाव मधु प्रियम् ।
जहि विश्वान्रक्षस इन्दो अत्रिणो
बृहद्वदेम विदथे सुवीराः ॥ ४८ ॥ २१ ॥

पवस्व । सोम । क्रतुऽवित् । नः । उक्थ्यः । अव्यः । वारे । परि । मधु । प्रियं । जहि । विश्वान् । रक्षसः । इंदोइति । अत्रिणः । बृहत् । वदेम । विदथे । सुऽवीराः ॥

पदार्थः—( सोम ) हे परमात्मन् ! त्वं ( क्रतुवित् ) कर्म्मणा वेत्ताऽसि । ( नः ) अस्मान् ( पवस्व ) पवित्रय । ( उक्थ्यः ) त्वं सर्वासामुपासनानामाधारोऽसि । आपिच (अव्यः) रक्षकः । तथा ( वारे ) वरणीये पुरुषे ( प्रियं, मधु ) प्रियानन्दं (परिधाव) परिदेहि । ( इन्दो ) हे प्रकाशस्वरूप परमात्मन् ! त्वं ( अत्रिणो, विश्वान् रक्षसः ) सर्वाणि हिंसकरक्षांसि (जहि) हिंसय । ( सुवीराः ) सुसन्ततिमन्तो वयम् (विदथे) महत्सु यज्ञेषु ( बृहद्वदेम ) भवतः स्तुतिं कुर्य्याम ॥

**पदार्थ**—( सोम ) हे परमात्मन् ! आप ( ऋतुवित् ) कर्मोंके वेत्ता हैं ( नः ) हमको आप ( पवस्व ) पवित्र करें । ( उक्थ्यः ) आप सर्वोपासनाओंके आधार हैं। और ( अव्यः ) रक्षक हैं । तथा ( वारे ) वरणीयपुरुषमें ( प्रियं मधु ) प्यारे आनन्दको ( परिधाव ) दें । ( इन्दो ) हे प्रकाशस्वरूप ! ( अत्रिणो विश्वान् रक्षसः ) सम्पूर्ण हिंसक राक्षसोंको आप ( जहि ) मारें ( सुवीराः ) सुन्दरसन्तानवाले हम ( विदथे ) बड़े बड़े यज्ञों में ( बृहद्वदेम ) आपकी अत्यन्त स्तुति करें ॥

**भावार्थ**—इस मन्त्रमें राक्षसोंसे तात्पर्य्य यज्ञविघ्नकारी दुष्टाचारियोंसे है क्योंकि ( रक्षन्ति येभ्यस्ते राक्षसाः ) जिनसे रक्षा कीजाय उनका नाम यहां राक्षस है, तात्पर्य्य यह कि सब विघ्नोंसे बचाकर परमात्मा हमारे यज्ञोंकी पूर्ति करें ॥

इति षडशीतितमं सूक्तमेकविंशो वर्गश्च समाप्तः ॥

यह ८६ वाँ सूक्त और २१ वाँ वर्ग समाप्त हुआ ॥

---

अथ नवर्चस्य सप्ताशीतितमस्य सूक्तस्य—

१—९ उशना ऋषिः ॥ पवमानः सोमो देवता ॥ छन्दः—१, २ निचृत्त्रिष्टुप् । ३ पादनिचृत्त्रिष्टुप् । ४, ८ विराट् त्रिष्टुप् । ५—७, ९ त्रिष्टुप् ॥ धैवतः स्वरः ॥

अस्मिन् सूक्ते ऋषिविप्रादिनामभिः परमात्मैववर्ण्यते—

इस सूक्तमें ऋषिविप्रादिनामोंसे परमात्माकाही वर्णन है—

प्र तु द्र॑व॒ परि॒ कोशं॒ नि षी॑द॒
नृभिः॑ पुना॒नो अ॒भि वाज॑मर्ष ।
अश्वं॒ न त्वा॑ वा॒जिनं॑ म॒र्जय॑न्तोऽ-
च्छा॑ ब॒र्हीं र॑श॒नाभि॑र्नयन्ति ॥ १ ॥

प्र । तु । द्र॒व॒ । परि॑ । कोश॑म् । नि । सी॒द॒ । नृऽभिः॑ । पु॒ना॒नः । अ॒भि । वाज॑म् । अ॒र्ष॒ । अश्व॑म् । न । त्वा॒ । वा॒जिन॑म् । म॒र्जय॑न्तः । अच्छ॑ । ब॒र्हिः । र॒श॒नाभिः॑ । न॒य॒न्ति॒ ॥

**पदार्थः**—हे परमात्मन् ! ( तु ) शीघ्रं ( प्रद्रव ) गच्छ । गत्वाच ( कोशं ) कर्म्मयोगिनोऽन्तःकरणं ( परिनिषीद ) गृहाण । ( नृभिः ) आपिच नरैः ( पुनानः ) पूज्यमानस्त्वं ( वाजं ) बलं ( अभ्यर्ष ) वर्ष । अश्वं ) विद्युतः (न) तुल्यं ( त्वा, वाजिनं ) बलस्वरूपं त्वां ( मर्जयन्तः ) उपासकाः ( अच्छाबर्हिः ) यज्ञं प्रति (रशनाभिः) उपासनाभिः ( नयन्ति ) प्राप्नुवन्ति ।

**पदार्थ**— हे परमात्मन् ! ( तु ) शीघ्र ( प्रद्रव ) गमन करो और गमन करके ( कोशं ) कर्म्मयोगीके अन्तःकरणको ( परिनिषीद ) ग्रहण करो ( नृभिः ) और मनुष्योंसे ( पुनानः ) पूज्यमान आप ( वाजं ) बलकी ( अभ्यर्ष ) वृष्टि करो ( अश्वं ) विजली के ( न ) समान ( त्वा वाजिनं ) बलस्वरूप आपकी (मर्जयन्तः) उपासना करते हुए उपासक लोग (अच्छाबर्हिः) यज्ञके प्रति आपकी ( रशनाभिः ) उपासना द्वारा ( नयन्ति ) आपका साक्षात्कार करते हैं ।

भावार्थ—यहां (वाजी) नाम बलवान् का है, बलस्वरूपपरमात्मासे यहां हृदयकी शुद्धिकी प्रार्थना कीगई है, जो लोग ' वाजी ' के अर्थ घोड़ा करके वेदों के अर्थोंको उच्चभावसे गिराकर निन्दित बनादेते हैं वे अत्यन्त भूल करते हैं ' वाज ' शब्दके अर्थ ( अन्न, ऐश्वर्य्य, और बल ) ही हैं इसलिये ( ये वाजिनं परिपश्यन्ति पक्कम् ) इत्यादिमन्त्रोंमें ऐश्वर्यके परिपक्क करनेका अर्थहै घोड़ा मारनेका नहीं ।

स्वायुधः पवते देव इन्दु-
रशस्तिहा वृजनं रक्षमाणः ।
पिता देवानां जनिता सुदक्षो
विष्टम्भो दिवो धरुणः पृथिव्याः ॥ २ ॥

सुऽआयुधः । पवते । देवः । इंदुः । अशस्तिऽ हा । वृजनं । रक्षमाणः । पिता । देवानां । जनिता । सुऽदक्षः विष्टंभः । दिवः । धरुणः । पृथिव्याः ॥

पदार्थः—हे परमात्मन् ! त्वं (दिवः) द्युलोकस्य (विष्टम्भः) आधारस्तथा ( पृथिव्याः ) (धरण्याः ) धरुणः )धारकः (सुदक्षः) चतुरस्तथा ( देवानां जनिता ) सूर्य्यादिदिव्यज्योतिषामुत्पादकः । वृजनं ) व्यसनेभ्यः ( रक्षमाणः )रक्षांकुर्वाणः (पिता) पितृतुल्यः (अशस्तिहा) रक्षसां हननकर्ता । (इन्दुः) सर्वप्रकाशकः ( देवः ) दिव्यरूपश्चासि । ( स्वायुधः ) सर्वशक्तिसम्पन्नः परमात्मा ( पवते ) मां पवित्रयतु ।

पदार्थ—हे परमात्मन् ! आप ( दिवः ) द्युलोकके ( विष्टम्भः ) आधार हैं तथा ( पृथिव्याः ) पृथिवीके ( धरुणः ) धारण करनेवाले हैं । (सुदक्षः) चतुर तथा ( देवानां जनिता ) सूर्य्यादिदिव्यज्योतियोंके उत्पादक हैं ! ( वृजिनं ) व्यसनोंसे ( रक्षमाणः ) रक्षा करते हुए ( पिता ) पिताके समान ( अशस्तिहा ) राक्षसोंको हनन करनेवाले हैं और ( इन्दुः ) सर्वप्रकाशक हैं । ( देवः ) दिव्यरूप हैं ( स्वायुधः ) सर्वशक्तिसम्पन्न हैं उक्त गुणोंवाले आप ( पवते ) हमको पवित्र करें ॥

भावार्थ—यहां सुदक्षादिनामोंसे उक्त परमात्माका प्रकारान्तरसे वर्णन किया है ॥

ऋषिर्विप्रः पुरएता जनानामृ-
भुर्धीर उशना काव्येन ।
स चिद्विवेद निहितं यदासाम-
पीच्यं गुह्यं नाम गोनाम् ॥ ३ ॥

ऋषिः । विप्रः । पुरःऽएता । जनानां । ऋभुः । धीरः । उशना । काव्येन । सः । चित् । विवेद । निःऽहितं । यत् । आसां । अपीच्यं । गुह्यं । नाम । गोनां ॥

पदार्थः—( ऋषिः ) ऋषति जानात्यतीन्द्रियार्थमिति ऋषिः, योऽतीन्द्रियार्थस्य ज्ञाता तस्येह नाम ऋषिः । तथा ( विप्रः ) यो मेधावी । ( पुर, एता, जनानां ) अपि च यो नराणां हृदये पूर्वमेव प्राप्तः । अपरञ्च ( ऋभुः ) अनन्तशक्तिसम्पन्नस्तथा

( धीरः ) धीरः ( काव्येन ) अन्यच्च स्वसर्वज्ञतया ( उशना ) सर्वत्र देदीप्यमानोऽस्ति । ( सः चित् ) स एव परमात्मा ( यदासां ) याः प्रकृतेः शक्तयः दीप्तिमत्यः तासां ( अपीच्यं ) अभ्यन्तरे ( गुह्यं नाम ) सर्वथा गुप्तरहस्यं ( निहितं ) न्यदधात् । तं परमात्मैव जानाति ।

पदार्थ—( ऋषिः ) ऋषति जानात्यतीन्द्रियार्थमिति ऋषिः, जो अतीन्द्रियार्थको जाने उसका नाम यहां ऋषि है तथा ( विप्रः ) जो मेधावी है ( पुर एता जनानां ) और जो मनुष्योंके हृदयमें पहिलेही प्राप्त है और ( ऋभुः ) अनन्तशक्तिसम्पन्न तथा ( धीरः ) धीर है और ( काव्येन ) अपनी सर्वज्ञतासे ( उशना ) सर्वत्र देदीप्यमान है । ( सश्चित् ) वही परमात्मा । ( यदासां ) जो प्रकृतिकी शक्तियोंके ( गोनां ) जो दीप्तिवाली हैं उनके ( अपीच्यं ) भीतर ( गुह्यंनाम ) सर्वोपरि गुह्य रहस्य ( निहितं ) रक्खा है उसको परमात्माही ( विवेद ) जानता है ।

भावार्थ—' ऋषति सर्वत्र गच्छति व्यापकत्वेन सर्वं व्याप्नोति ' इति, ऋषिः परमात्मा जो सर्वत्र व्यापक है उसका नाम यहां ऋषि है, यहां ऋषि, विप्र, इत्यादि नामोंसे परमात्माका वर्णन किया है । किसी जड़ वस्तुका नहीं ।

एष स्य ते मधुमाँ इन्द्र सोमो
वृषा वृष्णे परि पवित्रे अक्षाः ।
सहस्रसाः शतसा भूरिदावा
शश्वत्तमं बर्हिरा वाज्यस्थात् ॥ ४॥

एषः । स्यः । ते । मधुऽमान् । इंद्र । सोमः । वृषा । वृष्णे ।

परि । पवित्रे । अक्षारिति । सहस्रऽसाः । शतऽसाः । भूरिऽदावा । शश्वत्ऽतमं । बर्हिः । आ । वाजी । अस्थात् ॥

पदार्थः—( इन्द्र ) हे जगदीश्वर ! ( सोमः ) सोमस्वभावः । अपिच ( वृषा ) सर्वकामनानां दाताऽसि ( वृष्णे ) हे व्यापकपरमात्मन् ! ( एषः, स्य ) अयंसः ( ते ) तव ( मधुमान् ) मधुरतादिगुणानां दाता ( शतसाः, सहस्रसाः ) शतसहस्रशक्तीनां निधाता ( भूरिदावा ) अनेककामपूरकः ( शश्वत्तमम् ) सन्ततफलोत्पादकः ( बर्हिः ) यो यज्ञस्तथा ( वाजी ) बलयुक्तोऽस्ति, तं त्वं ( अस्थात् ) निजसत्तया सुशोभयसि । तथा ( पवित्रे ) पवित्रान्तःकरणेषु त्वं ( पर्य्यक्षाः ) आनन्दवर्षुकोस्ति ।

पदार्थ—( इन्द्र ) हे जगदीश्वर ! ( सोमः ) आप सोमस्वभाव हैं । और ( वृषा ) सब कामनाओंके देनेवाले हैं तथा ( पवित्रे ) पवित्र अन्तःकरणोंमें आप ( पर्यक्षाः ) आनन्दकी वृष्टि करनेवाले हैं ( वृष्णे ) हे व्यापकपरमात्मन् ! ( एषः स्यः ) वो ये ( ते ) तुम्हारा ( मधुमान् ) मधुरतादिगुणोंको देनेवाला ( शतसाः, सहस्रसाः ) सैकड़ों और हजारों शक्तियोंको रखनेवाला ( भूरिदावा ) जो अनन्तप्रकारकी कामनाओंको देनेवाला है ( शश्वत्तमम् ) निरन्तर फल उत्पन्न करनेवाला ( बर्हिः ) जो यज्ञ है तथा ( वाजी ) बलयुक्त है उसको आप ( अस्थात् ) अपनी सत्तासे सुशोभित करते हैं ।

भावार्थ—बर्हिः, इति 'अन्तरिक्षनामसुपठितम्' नि० अ० । २ । खं० १ । बर्हिः शब्दके मुख्यार्थ अन्तरिक्षके हैं जिसप्रकार अन्तरिक्ष नानाप्रकारकी ज्योतियोंका आधार और अनन्तप्रकार कामनारूपवृष्टियोंका

आधार इसीप्रकार यज्ञ भी अन्तरिक्षके समान विस्तृत है यहां रूपकालङ्कारसे यज्ञको बर्हिःरूपसे वर्णन किया है ।

एते सोमा अभि गव्या सहस्रा
महे वाजायामृताय श्रवांसि ।
पवित्रेभिः पवमाना असृग्रञ्छ्रवस्यवो
न पृतनाजो अत्याः ॥ ५ ॥ २२

एते । सोमाः । अभि । गव्या । सहस्रा । महे । वाजाय । अमृताय । श्रवांसि । पवित्रेभिः । पवमानाः । असृग्रन् । श्रवस्यवः । न । पृतनाजः । अत्याः ॥

पदार्थः—( एते ) पूर्वोक्ताः ( सोमाः ) परमात्मनःसौम्यस्वभावाः ( गव्या ) गतिशीलाय ( सहस्रा ) सहस्रशक्तिमते ( महे ) महते ( वाजाय, अमृताय ) यज्ञाय ( श्रवांसि ) ये ऐश्वर्य्यरूपाः ( पवित्रेभिः ) पूतान्तःकरणैः ये ( पवमानाः ) पावकाश्च सन्ति,उक्तस्वभावानां ( श्रवस्यवः ) यश इच्छवः उपासकाः ( पृतनाजः ) ये युद्धेषु जयमिच्छन्ति ते ( अत्याः न ) शीघ्रगामिन्या विद्युतः शक्तय इव ( अभ्यसृग्रन् ) दधतु ।

पदार्थ—( एते ) पूर्वोक्त ( सोमाः ) परमात्माके सौम्यस्वभाव ( गव्या ) गतिशील ( सहस्रा ) सहस्रशक्तियोंवाले ( महे ) बड़े ( वाजाय अमृताय ) यज्ञके लिये जो ( श्रवांसि ) ऐश्वर्यरूप हैं ( पवित्रेभिः ) पवित्र अन्तकरणोंसे जो ( पवमानाः ) पवित्रतावाले हैं वे उक्तस्वभावोंको ( श्रवस्यवः ) यशकी इच्छा करनेवाले उपासकलोग ( पृतनाजः ) जो युद्धोंमें

जेता बननेकी इच्छा करते हैं, वे ( अत्या न ) शीघ्रगामिनी विद्युत्की शक्तियोंके समान ( अभ्यसृग्रन् ) धारण करें ।

भावार्थ—जो लोग संसारमें विजेता बनना चाहें वे परमात्माके विचित्रभावोंको धारण करें जिसप्रकार सत्पुरुषके भावोंको धारण करनेसे पुरुष सत्पुरुष बन सकता है इसीप्रकार उस आदिपुरुषपरमात्माके गुणोंके धारण करनेसे उपासक सत्पुरुष महापुरुष वन सकता है इसका नाम परमात्मयोग है ॥

परि हि ष्मा पुरुहूतो जनानां
विश्वासरद्भोजना पूयमानः ।
अथाभर श्येन भृत प्रयांसि रयिं
तुञ्जानो अभि वाजमर्ष ॥ ६ ॥

परि । हि । स्म । पुरुऽहूतः । जनानां । विश्वा । असरत् । भोजना । पूयमानः । अथ । आ । भर । श्येनऽभृत । प्रयांसि । रयिं । तुंजानः । अभि । वाजं । अर्ष ॥

पदार्थः—( हि ) यतः परमात्मा (पुरुहूतः) सर्वस्योपास्यदेवोऽस्ति । ( जनानां ) मानवानां ( विश्वा ) सर्वेषां ( भोजना ) भोग्यपदार्थानां ( पूयमानः ) पावकः ( पर्य्यसरत् ) उपासकाना हृदये समागत्य विराजते । ( श्येनभृतः ) विद्युच्छक्तिधारकः परमात्मा ( प्रयांसि ) सर्वाण्यैश्वर्य्याणि पूरयताम् । अपिच त्वं ( रयिं ) धनं ( तुञ्जानः ) ददासि अपरञ्च त्वं मह्यं ( वाजं ) बलं ( अभ्यर्ष ) सर्वथा देहि ।

पदार्थ—( हि ) क्योंकि परमात्मा ( पुरुहूतः ) सबका उपास्य-देव है । ( जनानां ) मनुष्योंके ( विश्वा ) सब ( भोजना ) भोग्यपदार्थों-को ( पूयमानः ) पवित्र करनेवाला ( पर्यसरत् ) उपासकोंके हृदयमें आकर विराजमान होता है । ( अथ ) और ( श्येनभृतः ) विद्युत्की शक्तियोंको धारणकरनेवाला परमात्मा ( प्रयांसि ) सब ऐश्वर्योंको ( आभर ) पूर्ण करें और आप ( रयिं ) धनको ( तुञ्जानः ) देनेवाले हैं और आप हमको (वाजं) बल ( अभ्यर्ष ) सब प्रकारसे दें ।

भावार्थ—इस मन्त्रमें परमात्माको सर्वैश्वर्य्यप्रदातारूपसे वर्णन किया है ।

एष सुवानः परि सोमः पवित्रे
सर्गो न सृष्टो अदधावदर्वा ।
तिग्मे शिशानो महिषो न शृङ्गे
गा गव्यन्नभि शूरो न सत्वा ॥ ७ ॥

एषः । सुवानः । परि । सोमः । पवित्रे । सर्गः । न । सृष्टः । अदधावत् । अर्वा । तिग्मेइति । शिशानः । महिषः । न । शृंगेइति । गाः । गव्यन् । अभि । शूरः । न । सत्वा ॥

पदार्थः—( एषः ) उक्तपरमात्मा ( सुवानः ) सर्वत्राविर्भूतः ( सोमः ) यः सौम्यस्वभावयुक्तः सः ( पवित्रे ) पवित्रान्तःकरणे ( सृष्टः ) विरचितानां ( सर्गः ) सृष्टीनां ( न ) तुल्यः (अर्वा) गतिशीलो यः परमात्मा सः ( पर्य्यदधावत् ) उपासकानामभिमुखं निजज्ञानदृष्ट्या समागच्छति । अपिच ( न ) यथा (तिग्मे)

तीक्ष्णे ( शृङ्गे ) अज्ञानविदारणे ( शिशानः ) निमग्नः (महिषः) महापुरुषो भवति । अथवा ( शूरः ) वीरः ( न ) यथा (सत्वा) स्थितिमान् भूत्वा ( गव्यन, गाः ) महदैश्वर्य्यमिच्छन् स्वलक्ष्याभिमुखं गच्छति तथैव परमात्मा उपासकान् ज्ञानदृष्ट्या लक्ष्यं निर्माति।

पदार्थ—( एषः ) उक्तपरमात्मा ( सुवानः ) सर्वत्र आविर्भूत ( सोमः ) जो सौम्यस्वभावयुक्त है वह ( पवित्रे)पवित्रअन्तःकरणमें ( सृष्टः ) रचेहुए (सर्गः) सृष्टियोंके ( न ) समान ( अर्वा ) गतिशील जो परमात्मा है वह ( पर्यदधावत् ) उपासकोंकी ओर अपनी ज्ञानदृष्टिसे आता है । ( न ) जिसप्रकार ( तिग्मे ) तीक्ष्ण ( शृङ्गे ) अज्ञानके विदारणमें ( शिशानः ) मग्न हुआ ( महिषः ) महापुरुष होता है अथवा ( शूरः ) शूरवीर ( न ) जैसे ( सत्वा ) स्थितिवाला होकर ( गव्यन् गाः ) बड़े ऐश्वर्य्यकी इच्छा करता हुआ अपने लक्ष्यकी ओर (अभि) जाता है इसीप्रकार परमात्मा उपासकोंको ज्ञान-दृष्टिसे लक्ष्य बनाता है।

भावार्थ—जो लोग श्रवणमननादि साधनोंके द्वारा अपने अन्तःकरणको ज्ञानका पात्र बनाते हैं परमात्मा उनके अन्तःकरणको अवश्यमेव ज्ञानसे भरपूर करता है।

एषा ययौ परमादन्तरद्रेः
कूचित्सतीरूर्वे गा विवेद ।
दिवो न विद्युत्स्तनयन्त्यभ्रैः
सोमस्य ते पवत इन्द्रधारा ॥ ८ ॥

एषा । आ । ययौ । परमात् । अंतः अद्रेः । कूऽचित् । सतीः ।

ऊर्वे । गाः । विवेद । दिवः । न । विऽद्युत् । स्तनयंती ।
अभ्रैः । सोमस्य । ते । पवते । इंद्र । धारा ॥

पदार्थः—( इन्द्र ) हे कर्म्मयोगिन् ! ( सोमस्य ) सौम्यगुणसम्पन्नस्य परमात्मनः ( धारा ) ज्ञानस्य धारा ( ते ) त्वा ( पवते ) पवित्रयतु । ( न ) यथा ( दिवः ) द्युलोकात् (अभ्रैः) मेघैः ( विद्युत् ) तड़ित् ( स्तनयन्ती ) शब्दायमाना विस्तारं प्राप्नोति तथैव परमात्मनो ज्ञानज्योतिस्त्वयि विस्तारं प्राप्नोतु । ( एषा ) उक्तधारा ( परमादद्रेः ) सर्वविदारको यः परमात्मा अस्ति तस्य ( अन्तः ) स्वरूपे ( कूचित् ) कस्मिन्नप्येकस्थाने गुप्तासती ( ऊर्वे ) गुप्तदेशे या ( गाः ) निजसत्तां ( विवेद ) लभते सा ( आययौ ) उपासकस्यान्तःकरणे स्थिरा भवति ।

पदार्थ—( इन्द्र ) हे कर्मयोगिन् ! ( सोमस्य ) सौम्यगुणविशिष्ट-परमात्माकी ( धारा ) ज्ञानकी धारा ( ते ) तुमको ( पवते ) पवित्र करे ( न ) जिसप्रकार ( दिवः ) द्युलोकसे ( अभ्रैः ) अभ्रोंके द्वारा ( विद्युत् ) बिजली ( स्तनयन्ती ) शब्द करतीहुई विस्तार पाती है इसी प्रकार परमात्माकी ज्ञानज्योति तुममें विस्तारको प्राप्त हो । ( एषा ) उक्तधारा ( परमादद्रेः ) सबको विदीर्ण करनेवाला जो परमात्मा है उसके ( अन्तः ) स्वरूपमें ( कूचित्सती ) किसी एक स्थानमें गूढ़ हुई ( ऊर्वे ) गूढ़देशमें जो ( गाः ) अपनी सत्ताको ( विवेद ) लाभ कर रही है वह ( आययौ ) उपासकके अन्तःकरणमें स्थिर होती है ॥

भावार्थ—परमात्मा अपने भक्तके हृदयमें अपने भावोंको प्रकाश करता है ।

उत स्म राशिं परि यासि
गोनामिन्द्रेण सोम सरथं पुनानः ।

पूर्वीरिषो बृहतीजीरदानो शिक्षा
शचीवस्तव ता उपष्टुत् ॥ ९ ॥ २३ ॥

उत । स्म । राशिं । परि । यासि । गोनां । इंद्रेण । सोम । सऽरथं । पुनानः । पूर्वीः । इषः । बृहतीः । जीरदानो इति जीरऽदानो । शिक्ष । शचीऽवः । तव । ताः । उपऽस्तुत ॥

पदार्थ—:( सोम ) हे परमात्मन् ! ( इन्द्रेण ) कर्म्मयोगिना सह ( सरथं ) मित्रतां ( पुनानः ) पवित्रयन् त्वं ( गोनां राशिं ) ज्ञानशक्तीनां समूहं (परियासि) प्राप्नोषि (उतस्म) तथा च ( पूर्वीः ) पुरातनानि ( वहतीः इषः ) यानिमहैश्वर्याणितेषां ( जीरदानो ) दायकोऽसि ( शचीवः ) हे ऐश्वर्य्यसम्पन्न परमात्मन् ! ( उपष्टुत ) स्तुतियोग्योऽसि (ताः) तासामैश्वर्य्यादिशक्तीनां त्वं मह्यं शिक्षां देहि ।

पदार्थ—( सोम ) हे परमात्मन ! ( इन्द्रेण ) कर्मयोगीके साथ ( सरथं ) मैत्रीभावको ( पुनानः ) पवित्र करते हुए आप ( गोनां राशिं ) ज्ञानरूपीशक्तियोंके भण्डारको ( परियासि ) प्राप्त होते हैं । ( उतस्म ) अपिच ( पूर्वीः ) अनादिकालके जो ( बृहतीः ) बडे ( इषः ) ऐश्वर्य हैं उनके ( जीरदानो ) आप देनेवाले हैं । ( शचीवः ) हे ऐश्वर्यसम्पन्नपरमात्मन् ( उपष्टुत ) आप स्तुतियोग्य हैं ( ताः ) उन ऐश्वर्यादि शक्तियोंकी आप हमें शिक्षा प्रदान करें ॥

भावार्थ—इस मन्त्रमें परमात्मा शुभ शिक्षाओंका उपदेश करता है और ऐश्वर्य प्रदानके भावोंका प्रकाश करता है ।

इति सप्ताशीतितमं सूक्तं त्रयोविंशो वर्गश्च समाप्तः ।
यह ८७ वां सूक्त और २३ वां वर्ग समाप्त हुआ ।

अथाष्टर्चस्याष्टाशीतितमस्य सूक्तस्य–

१–८ उशना ऋषिः ॥ पवमानः सोमो देवता ॥ छन्दः–१ पंक्तिः । २, ४, ८ विराट् त्रिष्टुप् । ३, ६, ७ निचृत्त्रिष्टुप् । ५ त्रिष्टुप् ॥ स्वरः–१ पञ्चमः २–८ धैवतः ॥

अयं सोम इन्द्र तुभ्यं सुन्वे
तुभ्यं पवते त्वमस्य पाहि त्वं ।
ह यं चकृषे त्वं ववृषे इन्दुं
मदाय युज्याय सोमम् ॥ १ ॥

अयं । सोमः । इन्द्र । तुभ्यं । सुन्वे । तुभ्यं । पवषे । त्वं । अस्य । पाहि । त्वं । ह । यं । चकृषे । त्वं । ववृते । इंदुं । मदाय । युज्याय । सोमं ॥

पदार्थः—( इन्द्र ) हे कर्म्मयोगिन् ( तुभ्यं, सुन्वे ) तव संस्काराय ( अयं, सोमः ) अयं सोमःपरमात्मा ( तुभ्यं, पवते ) त्वा पवित्रयति । ( त्वं ) पूर्वोक्तस्त्वं ( अस्य ) अमुष्याज्ञा ( पाहि ) रक्ष । ( त्वं ) पूर्वोक्तस्त्वं ( यं ) यस्य ( इन्दुं ) प्रकाशस्वरूपस्य ( सोमं ) परमात्मन ( चकृषे ) उपासना करोषि,-सः ( त्वं ) तव ( ववृषे ) वरणाय ( मदाय ) आनन्ददानाय च

स्वीकरोति त्वाम् अतस्त्वं ( युज्याय ) स्वसाहाय्याय ( सोमं ) सोमस्वरूपपरमात्मन उपासनां कुरु ।

**पदार्थ**—( इन्द्र ) हे कर्म्मयोगिन् ! ( तुभ्यं सुन्वे ) तुम्हारे संस्कार के लिये ( अयं सोमः ) यह सोमपरमात्मा ( तुभ्यं पवते ) तुमको पवित्र करता है । ( त्वं ) तुम ( अस्य ) इसकी आज्ञाको ( पाहि ) पालन करो । ( त्वं ) तुम ( यं ) जिस ( इन्दुं ) प्रकाशरूप ( सोमं ) परमात्माकी ( चकृषे ) उपासना करते हो । वह ( त्वं ) तुम्हारे ( ववृषे ) वरण करनेके लिये और ( मदाय ) आनन्द देनेके लिये स्वीकार करता है । इसलिये तुम ( युज्याय ) अपनी सहायताके लिये ( सोमं ) सोमरूपपरमात्माकी उपासना करो ।

**भावार्थ**—जोलोग परमात्माको शुद्धभावसे वर्णन करते हैं परमात्मा उनको अवश्यमेव शुद्धि प्रदान करता है ।

स ईं रथो न भुरिषाळयोजि महः
पुरूणि सातये वसूनि ।
आदीं विश्वा नहुष्याणि जाता
स्वर्षाता वन ऊर्ध्वा नवन्त ॥ २ ॥

सः । ईं । रथः । न । भुरिषाट् । अयोजि । महः । पुरूणि । सातये । वसूनि । आत् । ईं । विश्वा । नहुष्याणि । जाता । स्वःऽसाता । वने । ऊर्ध्वा । नवंत ॥

**पदार्थः**—( सः, इं ) सोऽयं सोमः ( रथो, न ) गतिशील विद्युदादि पदार्थो इव ( भुरिषाट् ) सर्वगतिकारकोऽस्ति

अपिच सर्वपदार्थानुत्पत्तिसमये ( अयोजि ) संमिश्रयति । ( पुरूणि, वसूनि ) बहूनि धनानि ( सातये ) सुखं दातुं (आर्दी) निश्चयेनयः ( नहुष्याणि ) मनुष्ययोग्योऽस्ति तस्मैददाति । ( वने, स्वर्षाता ) संग्रामे ( विश्वा ) वहवः ( जाताः ) येऽस्य उत्पन्नाः ( ऊर्ध्वा, नवन्त ) ते ऊर्ध्वपदात् नीचैर्भवन्तु ।

**पदार्थ**—( सः इं ) यह सोम ( रथो न ) गतिशील विद्युदादि-पदार्थोंके समान ( भुरिषाट् ) सबको गति करानेवाला है । और सब पदार्थों-को उत्पत्तिसमयमें ( अयोजि ) मिलाता है । ( पुरूणि वसूनि ) बहुतसे धनों-को ( सातये ) सुख देनेके लिये (आर्दी) निश्चय जो (नहुष्याणि) मनुष्यत्व के योग्य हैं उनको देता है ( वनेस्वर्षाता ) संग्राममें (विश्वा) जो बहुतसे ( जाताः ) शत्रु उत्पन्न हो गये हैं वे ( ऊर्ध्वानवन्त ) नीचे हों ।

**भावार्थ**—परमात्मा हमको अनन्त प्रकारके ऐश्वर्य्य प्रदान करे और हमारे अन्यायकारी प्रतिपक्षियोंको दूर करे ।

वायुर्न यो नियुत्वाँ इष्टयांमा
नासत्येव हव आ शम्भविष्ठः ।
विश्ववारो द्रविणोदा इव त्मन्पूषेव
धीजवनोऽसि सोम ॥ ३ ॥

वायुः । न । यः । नियुत्वांन् । इष्टऽयांमा । नासत्याऽइव । हवे । आ । शंऽभविष्ठः । विश्वऽवारः । द्रविणोदाःऽइव । त्मन् । पूषाऽइव । धीऽजवनः । असि । सोम ॥

**पदार्थः**—( यः ) यः सोमः ( वायुर्न ) पवन इव ( नियुत्वान् ) वेगवान्, ( इष्टयामा ) स्वेच्छया गमनशीलः, नासत्येव विद्युदिव (सम्भविष्टः) अतिशयसुखदायकः, (विश्ववारः) निखिलवरणीयः, ( पूषेव ) पूषेव पोषकः, ( सवितेव, धीजवनः, असि ) सूर्य्यसमानो मनोवेगवाँश्चासि । हे उक्तगुणसम्पन्न सोम ! त्वं मा पाहि ।

**पदार्थ**—( यः ) जो सोम ( वायुर्न ) वायुके समान (नियुत्वान्) वेगवाला है । ( इष्टयामा ) स्वेच्छाचारी गमनवाला है । और ( नासत्येव ) विद्युत्के समान ( शम्भविष्टः ) अत्यन्त सुखके देनेवाला है । ( विश्ववारः ) सबके वरण करने योग्य है । ( पूषेव ) पूषाके समान पोषक है । ( सवितेव, धीजवनः, असि ) सूर्य्यके समान मनोरूपवेगवाला है । उक्तगुणसम्पन्न हे सोम ! आप हमारी रक्षा करें ।

**भावार्थ**—इस मन्त्रमें पूर्वोक्तगुणसम्पन्न परमात्मासे यह प्रार्थना है कि, हे परमात्मन् ! आप हमारे अन्तःकरणको शुद्ध करें ॥

इन्द्रो न यो महा कर्माणि चक्रि-
र्हन्ता वृत्राणामसि सोम पूर्भित् ।
पैद्वो न हि त्वमहिनाम्नां हन्ता
विश्वस्यासि सोम दस्योः ॥ ४ ॥

इन्द्रः । न । यः । महा । कर्माणि । चक्रिः । हंता । वृत्राणां । असि । सोम । पूःऽभित् । पैद्वः । न । हि । त्वं । अहिऽनाम्नां । हंता । विश्वस्य । असि । सोम । दस्योः ॥

पदार्थः—(यः) योऽयं सोमः (इन्द्रो, न) इन्द्रतुल्यः (महाकर्म्माणि) महतां कर्म्मणां कारकोऽस्ति। (सोम) हे परमात्मन्! (वृत्राणां, हन्ता, असि) त्वमज्ञानानां नाशकोसि। (पूर्भित्) अज्ञानग्रन्थिभेदकोऽसि। (पैद्वो, न) विद्युदिव (अहिनाम्नां) तमसां (हन्ता) घातकश्चासि। (विश्वस्य, दस्योः) त्वं निखिलदस्यूनां (हन्ता, असि) हननकर्ताऽसि।

पदार्थ—(यः) जो सोम (इन्द्रोन) इन्द्रके समान (महाकर्म्माणि) बड़े २ कर्म्मोंको (चक्रिः) करता है। (वृत्राणां हन्ता असि) अज्ञानोंके तुम हनन करनेवाले हो। (सोम) हे सोम। (पूर्भित्) अज्ञानरूपीग्रन्थिओंको भेदन करनेवाले हो (पैद्वान) और विद्युत् के समान (अहिनाम्नां) अन्धकारोंके (हन्ता) हनन करनेवाले हो। (विश्वस्य दस्योः) सम्पूर्ण दस्युओंके आप (हन्ता, असि) हनन करने वाले हैं।

भावार्थ—परमात्मा सवप्रकारके अज्ञानोंका नाश करनेवाला है उसकी कृपासे उपासकमें ऐसा प्रभाव उत्पन्न होता है जिससे वह विद्युत्के समान तेजस्वी बनकर विरोधी शक्तियोंका दलन करता है॥

अ॒ग्निर्न यो वन॒ आ सृ॒ज्यमा॑नो॒
वृ॒था पाजां॑सि कृणु॒ते न॒दीषु॑।
जनो॒ न युध्वा॑ मह॒त उ॑प॒ब्दिरिय॑र्ति॒
सोमः॒ पव॑मान ऊ॒र्मिम्॥५॥

अ॒ग्निः। न। यः। वने॑। आ। सृ॒ज्यमा॑नः। वृ॒था॑। पाजां॑सि।

कृणुते । नदीषु । जनः । न । युध्वा । महतः । उपब्दिः । इयर्ति । सोमः । पवमानः । ऊर्मिम् ॥

पदार्थः—( यः ) यः सोमः ( सृज्यमानोऽग्निर्न ) उत्पन्नाग्निरिव ( वने ) अरण्ये ( पाजासि ) बलानि ( वृथा कृणुते ) व्यर्थयति । ( नदीषु ) अन्तरिक्षेषु ( पाजांसि ) जलबलानि ( वृथाकृणुते ) व्यर्थयति । ( जनोन ) यथा नरः ( युध्वा ) युद्धं कृत्वा (महत,उपब्दिः) महाशब्दंकुर्वन्( इयर्ति ) प्रेरयति । एवमेव ( पवमानः ) सर्वपावकः ( सोमः ) परमात्मा ( ऊर्मिं ) आनन्दतरंगान् वाहयति ।

पदार्थ—( यः ) जो सोम ( सृज्यमानः अग्निर्न ) उत्पन्न की हुई अग्निके समान ( वने ) वनमें ( पाजांसि ) बलोंको ( वृथा कृणुते ) व्यर्थ कर देता है । ( नदीषु ) अन्तरिक्षोंमें ( पाजांसि ) जलके बलोंको वृथा कृणुते ) व्यर्थ कर देता है । ( जनोन ) जिसप्रकार मनुष्य ( युध्वा ) युद्ध करके ( महत उपब्दिः ) बड़ा शब्द करता हुआ ( इयर्ति ) प्रेरणा करता है । इसी प्रकार ( पवमानः ) सबको पवित्र करनेवाला ( सोमः ) सोम ( ऊर्म्मिम ) आनन्दकी लहरोंको बहाता है ।

भावार्थ—अग्नि जिस प्रकार सब तेजोंको तिरस्कृत करके अपने में मिलालेता है अर्थात् विद्युदादितेज, जैसे अन्य तुच्छ तेजोंको तिरस्कृत करदेता है इसी प्रकार परमात्माके समक्ष सब तेज तुच्छ हैं अर्थात् परमात्मा ही सब ज्योतियोंकी ज्योति होनेसे स्वयंज्योति है ।

एते सोमा अति वाराण्यव्या
दिव्या न कोशासो अभ्रवर्षाः ।

वृथा समुद्रं सिन्धवो न नीचीः
सुतासो अभि कलशाँ असृग्रन् ॥ ६ ॥

एते । सोमाः । अति । वाराणि । अव्या । दिव्याः । न ।
कोशासः । अभ्रऽवर्षाः । वृथा । समुद्रं । सिंधवः । न ।
नीचीः । सुतासः । अभि । कलशान् । असृग्रन् ॥

पदार्थः—( एते, सोमाः ) उक्तपरमात्मनः सोमादिगुणाः ( वाराण्यव्या ) वरणीयान् रक्षणीयाञ्च सर्वदिव्यपदार्थान् ( कोशासः ) पात्राणिच ( अभ्रवर्षाः, न ) मेघस्य वर्षा इव परिपूर्णयन्ति । आपिच ( वृथा ) यथाऽनायासेनैव ( समुद्रं ) अन्तरिक्षं ( सिन्धवः ) स्यन्दनशीलप्रकृतेः सत्वादिगुणाः प्राप्नुवन्ति, तथैव ( नीची, न ) निम्नाभिमुखं ( सुतासः ) आविर्भावं प्राप्नुवन्तो गुणाः ( कलशां ) शुद्धान्तःकरणान्यभि ( अभि, असृग्रन् ) सर्वथा गच्छन्ति ।

पदार्थ—(एते सोमाः ) उक्त परमात्माके सोमादिगुण (वाराण्यव्या) वरणीय और रक्षणीय दिव्यांदिव्य पदार्थोंको ( कोशासः ) पात्रोंको (अभ्रवर्षाः, न ) मेघकी वर्षाके समान परिपूर्णकर देते हैं । और ( वृथा ) जैसे अनायाससे ही ( समुद्रं ) अन्तरिक्षको ( सिन्धवः ) स्यन्दनशील प्रकृतिके सत्वादिक गुण प्राप्त होते हैं इसी प्रकार (नीचर्न) नीचाईकी ओर (सुतासः) आविर्भावको प्राप्त हुए हुए गुण ( कलशां ) शुद्ध अन्तःकरणोंकी ( आभि, असृग्रन् ) ओर भलीभांति गमन करते हैं ।

भावार्थ—जिन पुरुषोंका अन्तःकरण पवित्र है ' अर्थात् जिन्होंने

श्रवण मनन तथा निदिध्यासन द्वारा अपने अन्तःकरणोंको शुद्ध किया है' परमात्माके ज्ञानका प्रवाह उनके अंन्तःकरणोंकी ओर स्वतः ही प्रवाहित होता है।

शुष्मी शर्धो न मारुतं पवस्वा-
नभिशस्ता दिव्या यथा विट्।
आपो न मक्षू सुमतिर्भवा नः
सहस्राप्साः पृतनाषाण्न यज्ञः ॥ ७ ॥

शुष्मी। शर्धः। न। मारुतं। पवस्व। अनभिऽशस्ता। दिव्या। यथा। विट्। आपः। न। मक्षु। सुऽमतिः। भव। नः। सहस्रऽअप्साः। पृतनाषाट्। न। यज्ञः ॥

पदार्थः—(शुष्मी) "सर्वशोषणात्परमात्मनोनाम शुष्मी" हे बलस्वरूप परमात्मन्! (मारुतं) विदुषागणान् (शर्धो, न) बलवत् (पवस्व) त्वं पवित्रय (यथा) येन प्रकारेण (दिव्या विट्) दिव्यप्रजाना (अनभिशस्ता) सुखप्रदोराजा पूतो भवति। तथैव (आपो, न) सत्कर्मतुल्यः (मक्षू) शीघ्रं (सुमतिः, भव) मह्यं सुमतिमुत्पादय। (सहस्राप्साः) अनन्त-शक्तिसम्पन्नस्त्वं (पृतनाषाट्) संग्रामेषु दुराचारिणान्नाशकर्त्तः परमात्मन्! त्वं (यज्ञो, न) मह्यं यज्ञतुल्यो भव।

पदार्थ—(शुष्मी) सबको शोषण करनेके कारण परमात्माका नाम शुष्मी है। हे बलस्वरूपपरमात्मन्! (मारुतं) विद्वानोंके गणको

( शर्धो न ) बलके समान ( पवस्व ) आप पवित्र करें । ( यथा ) जैसे ( दिव्या, विट् ) दिव्यप्रजाओंका ( अनभिशस्ता ) सुख देनेवाला राजा पवित्र होता है इसीप्रकार ( आपोन ) सत्कर्मों के समान ( मक्षु ) शीघ्र ( सुमतिः भव ) हमारे लिये सुमतिं उत्पन्न करें ( सहस्राप्साः ) अनन्तशक्तियोंवाले आप ( पृतनाषाट् ) अनाचारियोंको युद्धमें नाश करनेवाले परमात्मन् ! ( यज्ञोन ) आप हमारे लिये यज्ञके समान हों ।

**भावार्थ**—परमात्माका बल सब बलोंमेंसे मुख्य है इसीलिये ( य आत्मदा बलदा यस्य विश्व उपासते । ऋ० । मं० । १० । २१ । २ इत्यादि मन्त्रोंमें जिसको सर्वोपरि बलस्वरूप कथन किया गया है वह हमको बल प्रदान करे ॥

राज्ञो नु ते वरुणस्य व्रतानि
बृहद्गभीरं तव सोम धाम ।
शुचिष्टमसि प्रियो न मित्रो
दक्षाय्यो अर्यमेवासि सोम ॥ ८ ॥ २४ ॥

राज्ञः । नु । ते । वरुणस्य । व्रतानि । बृहत् । गभीरं । तव । सोम । धाम । शुचिः । त्वं । असि । प्रियः । न । मित्रः । दक्षाय्यः । अर्यमाऽइव । असि । सोम ॥

पदार्थः—हे परमात्मन् ! ( ते, वरुणस्य, राज्ञः ) यस्त्वं निजशक्त्या सर्वेषां वस्तूनाम् स्थापको राजाऽसि ( ते ) तव ( नु ) निश्चयेन ( व्रतानि ) अहम् आराधनानि दधानि । ( सोम ) हे परमात्मन् ! (तव धाम) तव स्वरूपाणि (बृहद्गभीरं) अतिगभीराणि सान्ति । अपिच ( शुचिस्त्वमासि ) त्वं नित्य शुद्धादि-

स्वभावोऽसि। (प्रियो, न) प्रियतुल्योऽसि। (मित्रो, न) सखेवासि। (दक्षाय्यः) मान्योऽसि। (अर्यमा, इवासि, सोम) हेपरमात्मन्! न्यायकारीभवान्।

पदार्थ—हे परमात्मन्! (ते वरुणस्य राज्ञः) तुम सब वस्तुओंको अपनी शक्तिमें रखनेवाले श्रेष्ठतम राजा हो। (ते) तुमारे (नु) निश्चय करके (व्रतानि) व्रतोंको हम धारण करें। (सोम) हे परमात्मन्! (तव-धाम) तुम्हारा स्वरूप (बृहद्गभीरं) बहुत गम्भीर है। और (शुचिस्त्वमसि) तुम नित्यशुद्धबुद्धमुक्तस्वभाव हो। (प्रियो, न) प्रियके समान हो। (मित्रोन) मित्रके समान हो। (दक्षाय्यः) मान्य हो। (अर्य्यमा इवासि, सोम) हे सोम परमात्मन्! आप न्यायकारी हो।

भावार्थः—इस मन्त्रमें परमात्माने व्रतपालनका उपदेश किया जो पुरुष व्रती होकर परमात्माके नियमका पालन करता है वह परमात्माकी आज्ञाओंका पालन करता है।

इत्यष्टाशीतितमं सूक्तं चतुर्विंशोवर्गश्च समाप्तः॥
यह ८८ वाँ सूक्त और २४ वाँ वर्ग समाप्त हुआ।

---

अथ सप्तर्चस्य नवाशीतितमस्य सूक्तस्य—

१–७ उशना ऋषिः॥ पवमानः सोमो देवता॥ छन्दः—१ पादनिचृत्त्रिष्टुप्। २, ५, ६, त्रिष्टुप्। ३, ७ विराट् त्रिष्टुप्। ४ निचृत्त्रिष्टुप्॥ धैवतः स्वरः॥

अथ परमात्मनि तद्धर्म्मताप्राप्तियोगो निरूप्यते।

अब परमात्माके गुण धारण करने रूपी योगका वर्णन करते हैं।

प्रो स्य वह्निः पथ्याभिरस्यान्दिवो
न वृष्टिः पवमानो अक्षाः।

सहस्रधारो असदन्न्य१स्मे मातु-
रुपस्थे वन आ च सोमः ॥ १ ॥

प्रो इति । स्यः । वह्निः । पथ्याभिः । अस्यान् । दिवः । न । वृष्टिः । पवमानः । अक्षारिति । सहस्रऽधारः । असदत् । नि । अस्मे इति । मातुः । उपऽस्थे । वने । आ । च । सोमः ॥

पदार्थः—( वह्निः ) वहति प्रापयतीति वह्निः, य उत्तम-गुणानां प्रापकस्तस्येह नाम वह्निरस्ति परमात्मा ( पथ्याभिः ) शुभमार्गैः ( अस्यान् ) शुभस्थानानि प्रापयति । ( प्रोस्यः ) स परमात्मा ( दिवः ) द्युलोकस्य ( वृष्टिः ) वर्षणं ( न ) इव ( पवमानः ) पावकोऽस्ति । ( अक्षाः ) स सर्वान् पश्यति । परमात्मा ( सहस्रधारः ) अनन्तशक्तियुक्तोऽस्ति । ( अस्मे ) मह्यं ( न्यसदत् ) विराजते । ( मातुरुपस्थे ) मातृक्रोडे ( च ) पुनः ( वने ) अरण्ये ( सोमः ) स परमात्मा ( आ ) सर्वत्रागत्य मां रक्षति ।

पदार्थ—( वह्निः ) वहति प्रापयतीति वह्निः जो उत्तम गुणोंको प्राप्त कराये उसका नाम यहां वह्नि है परमात्मा (पथ्याभिः) शुभ मार्गों द्वारा ( अस्यान् ) शुभस्थानोंको प्राप्त कराता है । ( प्रोस्यः ) वह परमात्मा ( दिवः ) द्युलोककी ( वृष्टिः ) वृष्टिके ( न ) समान ( पवमानः ) पवित्र करनेवाला है ( अक्षाः ) वह सर्वद्रष्टा परमात्मा है ( सहस्रधारः ) अनन्त-शक्तियोंसे युक्त है ( अस्मे ) हमारेलिये ( न्यसदत् ) विराजमान होता है । ( मातुरुपस्थे ) माताकी गोदमें ( च ) और ( वने ) वनमें ( सोमः ) वह परमात्मा ( आ ) सब जगहपर आकर हमारी रक्षा करता है ॥

**भावार्थ**—जिसप्रकार माताकी गोदमें पुत्र सानन्द विराजमान होता है इसीप्रकार उपासकलोग उसके अङ्कमें विराजमान हैं ।

तात्पर्य यह है कि ईश्वर विश्वासी भक्तोंको ईश्वरपर इतनाविश्वास होता है कि वे माताके समान उसकी गोदमें विराजमान होकर किसी दुःखका अनुभव नहीं करते ।

राजा सिन्धूनामवसिष्ट वास
ऋतस्य नावमारुहद्रजिष्ठाम् ।
अप्सु द्रप्सो वावृधे श्येनजूतो
दुह ईं पिता दुह ईं पितुर्जाम् ॥ २ ॥

राजा । सिंधूनां । अवसिष्ट । वासः । ऋतस्य । नावं । आ । अरुहत् । रजिष्ठां । अपऽसु । द्रप्सः । ववृधे । श्येनऽजूतः । दुहे । ईं । पिता । दुहे । ईं । पितुः । जां ॥

**पदार्थः**—स परमात्मा ( सिन्धूना ) प्रकृत्यादिपदार्थाना ( राजा ) पतिरस्ति । अपिच ( वासः ) सर्वस्थानानि ( अवसिष्ट ) आच्छादयति ( रजिष्टां, ऋतस्य, नावं ) यः सर्वेभ्यः सुखकारिणी कर्मरूपानौरस्ति; तस्यां ( आरुहत् ) आरोह्य ( अप्सु ) कर्मसमुद्रात् पारयति । ( द्रप्सः ) स आनन्दस्वरूपः परमात्मा ( ववृधे ) सदैव वृद्धिं प्राप्नोति । ( श्येनजूतः ) विद्युदिव दीप्तिमद्वृत्या गृहीतः परमात्मा ध्यानविषयो भवति । ( ईं ) अमुं ( पिता ) सत्कर्मभिः यज्ञपालको यजमानः ( दुहे ) परिपूर्णरूपेण दोग्धि । अर्थान्निजहृदयगतङ्करोति । ( पितुर्जाम् )

सदुपदेशकेनाविर्भावं प्राप्नुवन्तममुं परमात्मानं ( दुहे ) अहं प्राप्नोमि।

पदार्थ—वह परमात्मा (सिन्धूनां) प्रकृत्यादि पदार्थोंका (राजा) स्वामी है। और (वासः) सर्वनिवासस्थानोंका (अवसिष्ट) आच्छादन करता है। (रजिष्ठा ऋतस्य नावं) सबसे सुखाली जो कर्म्मोंकी नौका है। उसमें (आरुहत्) चढ़ाकर (अप्सु) कर्म्मोंके सागरसे पार करता है। (द्रप्सः) वह आनन्दस्वरूप परमात्मा (ववृधे) सदैव वृद्धिको प्राप्त है। (श्येनजूतः) विद्युत्के समान दीप्तिमतीवृत्तिसे ग्रहण कियाहुआ परमात्मा ध्यानका विषय होता है। (ईं) इसको (पिता) सत्कर्म्मों द्वारा यज्ञका पालन करनेवाला यजमान (दुहे) परिपूर्णरूपसे दुहता है। अर्थात् अपने हृदयङ्गत करता है। (पितुर्जाम्) सदुपदेशकसे आविर्भावको प्राप्तहुए इस परमात्माको (दुहे) मैं प्राप्त करता हूँ।

भावार्थ—जो पुरुष कर्मयोगी बनकर परमात्माकी आज्ञाके अनुसार परमात्माके नियमोंको पालन करता है वह परमात्माके साक्षात्कारको अवश्यमेव प्राप्त होता है।

सिंहं नसन्त मध्वो अयासं
हरिमरुषं दिवो अस्य पतिम्।
शूरो युत्सु प्रथमः पृच्छते
गा अस्य चक्षसा परि पात्युक्षा॥ ३॥

सिंहं। नसंत। मध्वः। अयासं। हरिं। अरुषं। दिवः। अस्य। पतिम्। शूरः। युतऽसु। प्रथमः। पृच्छते। गाः। अस्य। चक्षसा। परि। पाति। उक्षा॥

पदार्थः—( सिंहं ) यः सिंहतुल्यः, ( मध्वः ) आनन्दस्वरूपः, ( अयासं ) योऽनायासेनैव सृष्टेरुत्पत्तिस्थितिप्रलयकारकः, ( अरुषं ) दीप्तिमान् ( दिवः ) यो द्युलोकस्येश्वरश्चास्ति ( अस्य ) पूर्वोक्तस्य परमात्मनो ज्ञानं ( युत्सु, शूरः ) ज्ञानयज्ञादौ यो वीरः ( प्रथमः ) सर्वाग्रगण्यः स प्राप्नोति । ( अस्य, पृच्छते ) अपिचास्य ज्ञानं यः पृच्छति, तस्मै जिज्ञासवे ( अस्य, चक्षसा ) तस्य कथयिता ( गाः ) तज्ज्ञानमुपदिशति । अपरञ्च ( उक्षा ) निखिलकामनापूरकः परमात्मा ( परि, पाति ) तं रक्षति ।

पदार्थ—( सिंहं ) जो सिंहके समान है ( मध्वः ) आनन्दस्वरूप है । ( अयासं ) जो अनायाससे ही सृष्टिकी उत्पत्ति, स्थिति, प्रलय करनेवाला है ( अरुषं ) दीप्तिवाला ( दिवः ) जो द्युलोकका ( पति ) है ( अस्य ) उस परमात्माके ज्ञानको ( युत्सु शूरः ) जो ज्ञानयज्ञादिरूप युद्धमें शूरवीर ( प्रथमः ) जो सबसे अग्रगण्य है । वह पाता है । ( अस्य पृच्छते ) और जो इसके ज्ञानको पूँछता है । उस जिज्ञासुकेलिये (अस्य चक्षसा) इसका कथन करनेवाला ( गाः ) उस ज्ञानका उपदेश करता है । और ( उक्षा ) सब कामनाओंको परिपूर्ण करनेवाला परमात्मा ( परिपाति ) उसकी रक्षा करता है ।

भावार्थ—जो पुरुष परमात्मपरायण होते हैं परमात्मा उनकी अपने ज्ञानके द्वारा रक्षा करता है ।

मधुपृष्ठं घोरमयासमश्वं
रथे युञ्जन्त्युरुचक्र ऋष्वम् ।
स्वसार ईं जामयो मर्जयन्ति
सनाभयो वाजिनमूर्जयन्ति ॥ ४ ॥

मधुऽपृष्ठं । घोरं । अयासं । अश्वं । रथे । युंजंति । उरुऽचक्रे । ऋष्वं । स्वसारः । ईं । जामयः । मर्जयंति । सऽनाभयः । वाजिनं । ऊर्जयंति ।

पदार्थः—(मधुपृष्ठं) यः सैन्धवघनवत्सर्वत आनन्दमयः (घोरमयासं) यस्य प्रयत्नः घोरः अर्थाद्भयानकः (अश्वं) योगतिस्वरूपश्चास्ति । (ऊरुचक्रे, रथः) योद्रुतगतौ (युंजन्ति) विनियुङ्क्ते । (स्वसारः) स्वयं सरन्तीति स्वसारः इन्द्रियवृत्तयः (जामयः) या मनस उत्पन्नत्वात् परस्परं बन्धुतायाः सम्बन्धं विदधति । (सनाभयः) चित्तादुत्पन्नत्वात्सनाभिसम्बन्धवत्यः । चित्तवृत्तः (मर्जयन्ति) उक्तपरमात्मानं विषयीकुर्वन्ति । अपिच (वाजिनं) तंबलस्वरूपं विषयीकृत्योपासकस्यात्याध्यात्मिकबलं प्रददति ।

पदार्थ—(मधुपृष्ठं) जो सैन्धवघनवत् सर्व ओरसे आनन्दमय है (घोरमयासं) जिसका प्रयत्न घोर है । अर्थात् भयानक है और (अश्वं) जो गतिरूप है (ऊरुचक्रे रथे) अत्यन्त वेगवाली द्रुतगति में (युंजन्ति) जिसने नियुक्त किया है । (स्वसारः) "स्वयं सरन्तीति स्वसारः इन्द्रियवृत्तयः" स्वाभाविकगतिशीलइन्द्रियोंकी वृत्तियें (जामयः) जो मनसे उत्पन्न होनेके कारण परस्पर बन्धुपनका सम्बन्ध रखती हैं (सनाभयः) चित्तसे उत्पन्न होनेके कारण सनाभि सम्बन्ध रखनेवाली चित्तवृत्तियें (मर्जयन्ति) उक्तपरमात्माको विषय करती हैं । और (वाजिनं) उस बलस्वरूपको (ऊर्जयन्ति) विषय करके उपासकको अत्यन्त आध्यात्मिकबल प्रदान करती हैं ।

भावार्थ—इस मन्त्रमें जामीनाम चित्तवृत्तिका क्योंकि वृत्ति मनसे

उत्पन्न होती है और मनसे उत्पन्न होनेके कारण अन्यवृत्तियें भी उसके साथ सम्बन्ध रखनेके कारण जामी कहलाती हैं।

उक्त वृत्तियें जब परमात्माका साक्षात्कार करती हैं तो उपासकमें आत्मिकबल उत्पन्न होता है अर्थात् शारीरिक आत्मिक सामाजिक तीनों प्रकारके बलकी उत्पत्तिका कारण एकमात्र परमात्मा है कोई अन्य नहीं।

चतस्र ईं घृतदुहः सचन्ते

समाने अन्तर्धरुणे निषत्ताः ।

ता ईमर्षन्ति नमसा पुनानास्ता

ईं विश्वतः परि षन्ति पूर्वीः ॥ ५ ॥

चतस्रः । ईं । घृतऽदुहः । सचंते । समाने । अंतः । धरुणे । निऽसत्ताः । ताः । ईं । अर्षंति । नमसा । पुनानाः । ताः । ईं । विश्वतः । परि । सन्ति । पूर्वीः ॥

पदार्थः—( चतस्रः ) पथिव्यप्तेजोवायूना चतस्रः शक्तयः ( ईं ) अमुं परमात्मानं ( घृतदुहः ) याः स्नेहदोग्ध्र्यः सन्ति, ताः ( सचन्ते ) संगच्छन्ति (समाने, धरुणे,) एकस्मिन्नधिकरणे ( अन्तः, निषत्ताः ) व्याप्यव्यापकतायाः सम्बन्धं स्वीकृत्य ( ताः ) पूर्वोक्ताः शक्तयः ( पूर्वाः ) यां अनन्ताः सन्ति, ताः ( ईं ) अमुं परमात्मानं ( परिषन्ति ) सर्वतो विभूषयन्ति ।

पदार्थ—( चतस्रः ) पृथिवी जल तेज और वायुकी चारो शक्तियें ( ई ) इस परमात्माको जो ( घृतदुहः ) स्नेहके दोहन करनेवाली हैं। वे ( सचन्ते ) संगत होती हैं। ( समाने धरुणे ) एक अधिकरणमें ( अन्तः

निषत्ताः ) व्याप्यव्यापकताका सम्बन्ध रखकर ( ताः ) वे शक्तियें ( ईं ) इस परमात्माको ( अर्षन्ति ) प्राप्त होती हैं । ( नमसा ) ऐश्वर्य्यसे (पुनानाः) पवित्र करती हुई ( ताः ) वे शक्तियें ( पूर्वीः ) जो अनन्त हैं वे ( ईं ) इस परमात्माको ( परिषन्ति ) सर्व ओरसे विभूषित करती हैं।

भावार्थ—प्रकृतिकी परमाणुरूपशक्तियोंसे ईश्वरका ऐश्वर्य विभूषित होरहा है इन सब शक्तियोंका केन्द्र ऐकमात्र परमात्माही है उसी एकमात्र परब्रह्ममें ये उत्पत्ति स्थिति प्रलय करती हैं अर्थात् आविर्भावका नाम उत्पत्ति और सूक्ष्मरूपसे विराजमानहोने कानाम प्रलय है ।

विष्टम्भो दिवोधरुणः पृथिव्या
विश्वा उत क्षितयो हस्ते अस्य ।
असत्त उत्सो गृणते नियुत्वान्मध्वो
अंशुः पवत इन्द्रियाय ॥ ६ ॥

विष्टंभः । दिवः । धरुणः । पृथिव्याः । विश्वाः । उत । क्षितयः । हस्ते । अस्य । असत् । ते । उत्सः । गृणते । नियुत्वान् । मध्वः । अंशुः । पवते । इंद्रियाय ॥

पदार्थः—( दिवोविष्टम्भः ) यो द्युलोकस्याधिकरणं ( धरुणः, पृथिव्याः ) पृथिव्यधिकरणञ्चास्ति । ( उत ) अपिच ( विश्वाः, क्षितयः ) सर्वाणि लोकान्तराणि ( अस्य, हस्ते ) तस्य परमात्मनो हस्तगतानि सन्ति । ( उत्सः ) सर्वलोकानामुत्पत्तिस्थानम् । ( गृणते, ते ) स्तोत्रे उपासकाय ( नियुत्वान्, असत) ज्ञानप्रदः स्यात् (मध्वः) आनन्दस्वरूप (अंशुः) सर्वव्या-

पकश्चासि । (इन्द्रियाय) कर्म्मयोगिने (पवते) पवित्रतां प्रददातु ।

पदार्थ—( दिवोविष्टम्भः ) जो द्युलोकका सहारा है ( धरुणः पृथिव्याः ) और पृथिवीका आधार है ( उत ) और ( विश्वाः, क्षितयः ) सब लोकलोकान्तर ( अस्य, हस्ते ) उस परमात्मा के हस्तगत हैं। ( उत्सः ) वह सब लोगोंका उत्पत्तिस्थान है परमात्मा ( गृणते ते ) स्तुति करनेवाले उपासकके लिये ( नियुत्वान्, असत् ) ज्ञानप्रद हो ( मध्वः ) जो परमात्मा आनन्दस्वरूप है ( अंशुः ) सर्वव्यापक है । ( इन्द्रियाय ) कर्म्मयोगीके लिये ( पवते ) पवित्रता दे ।

भावार्थ—द्युभ्वादिलोकोंका अधिकरण एकमात्र वही परमात्मा है अर्थात् उसी परमात्माके सहारे सब ब्रह्माण्डोंकी स्थिति है इस प्रकार यहां परमात्माको अधिकरणरूपसे वर्णन किया है ।

वन्वन्नवातो अभि देववीति
मिन्द्राय सोम वृत्रहा पवस्व ।
शग्धि महः पुरुश्चन्द्रस्य रायः
सुवीर्यस्य पतयः स्याम ॥ ७ ॥ २५ ॥

वन्वन् । अवातः । अभि । देवऽवीतिं । इंद्राय । सोम । वृत्रऽहा । पवस्व । शग्धि । महः । पुरुऽचंद्रस्य । रायः । सुऽवीर्यस्य । पतयः । स्याम ॥

पदार्थः—( सोम ) हे परमात्मन् ! त्वं (वृत्रहा) अज्ञानविनाशकः ( इन्द्राय ) कर्म्मयोगिनं ( देववीतिं ) यो देवानायज्ञं

प्राप्नोति । ( वन्वन्नवातः ) अपिच योऽगाधोऽस्ति तं (अभि, पवस्व) सर्वतः पवित्रय । ( शग्धि ) सर्वयाचनापूरकः ( महः ) सर्वमहान् अपिच ( पुरुश्चन्द्रस्य,रायः ) सर्वेषामाह्लादकानामाह्लादको य आनन्दस्वरूपस्त्वमसि । तवानुकम्पया ( सुवीर्य्यस्य ) सर्वबलानामहं ( पतयः ) स्वामी भवेयम् ।

**पदार्थ**—( सोम ) हे परमात्मन् । ( वृत्रहा ) अज्ञानके नाश करनेवाले ( इन्द्राय ) कर्मयोगीको जो ( देववीतिं ) जोदेवताओंके यज्ञको प्राप्त है ( वन्वन्नवातः ) और जो गम्भीर है उसको ( अभि पवस्व ) सब ओरसे आप पवित्र करिये । ( शग्धि ) सबकी याचनाको पूर्ण करनेवाले ( महः ) सबसे बड़े और (पुरुश्चन्द्रस्य रायः) सब आह्लादको के आह्लादक जो आनन्दस्वरूप आप हैं आपकी कृपा से ( सुवीर्यस्य ) सब बलोंके हमलोग ( पतयः ) स्वामी ( स्याम ) हों ।

**भावार्थ**—हे परमात्मन् आपकी कृपासे हम सबलोकलोकान्तरोंके पति हों ।

इत्येकोननवतितमंसूक्तं पञ्चविंशोवर्गश्च समाप्तः ।

यह ८९ सूक्त २५ वां वर्ग समाप्त हुआ ।

अथ षड्ऋचस्य नवतितमस्य सूक्तस्य

॥ ९० ॥ १—६ वसिष्ठ ऋषिः ॥ पवमानः सोमो देवता ॥

॥ छन्दः—१, ३, ४, त्रिष्टुप् । २, ६, निचृत्त्रिष्टुप् ।

५ भुरिक् त्रिष्टुप् ॥ धैवतः स्वरः ॥

प्रहिन्वानो जनिता रोदस्यो

रथो न वाजं सनिष्यन्नयासीत् ॥

इन्द्रं गच्छन्नायुधा संशिशानो

विश्वा वसु हस्तयोरादधानः ॥ १ ॥

प्र । हिन्वानः । जनिता । रोदस्योः । रथः । न । वाजं । सनिष्यन् । अयासीत् । इन्द्रं । गच्छन् । आयुधा । संऽशिशानः । विश्वा । वसु । हस्तयोः । आऽदधानः ॥

पदार्थः—(हिन्वानः) शुभकर्म्मणि प्रेरयन् (रोदस्योर्जनिता) द्युलोकं पृथिवीलोकञ्चोत्पादयन् ( रथोन ) गतिशील विद्युदादि पदार्थाइव ( वाजं ) बलं ( सनिष्यत् ) ददत् ( अयासीत् ) आगत्य त्वं मम हृदये विराजस्व । हे परमात्मन् ! त्वं (आयुधा) बलप्रदशस्त्राणि ( संशिशानः ) संधुक्षयन् ( इन्द्रं, गच्छन् ) कर्म्मयोगिनं प्राप्नुवन् ( विश्वावसु ) सर्वप्रकाराण्यैश्वर्य्याणि ( हस्तयोः ) करयोः ( आदधानः ) धारयन् ( प्रायासीत् ) मत्सांमुख्यमागच्छ ।

पदार्थ—( हिन्वानः ) शुभ कर्मोंमें प्रेरणा करते हुए ( रोदस्योर्जनिता) द्युलोक और पृथिवीलोकको उत्पन्न करते हुए ( रथोन ) गतिशील विद्युदादिपदार्थोंके समान (वाजं) बलको (सनिष्यन्) देतेहुए ( अयासीत् ) आकर आप हमारे हृदयमें विराजमान हों, हे परमात्मन् ! आप ( आयुधा ) बलप्रद शस्त्रोंको ( संशिशानः ) तीक्ष्ण करते हुए ( इन्द्रंगच्छन् ) कर्मयोगीको प्राप्त होते हुए ( विश्वावसु ) सब प्रकारके ऐश्वर्योंको ( हस्तयोः ) हाथोंमें ( आदधानः ) धारण करते हुए ( प्रायासीत् ) हमारी ओर आयें ।

भावार्थ—जो जो विभूतिवाली वस्तु हैं उनसबमें परमात्माका तेज

विराजमान है इसलिये यहां परमात्माके आयुधोंका वर्णन किया है वास्तव-में परमात्मा किसी आयुधको धारण नहीं करता क्योंकि वह निराकार है।

अभि त्रिपृष्ठं वृषणं वयोधामाङ्गू-
षाणामवावशन्त वाणीः ।
वना वसानो वरुणो न सिन्धून्वि
रत्नधा दयते वार्याणि ॥ २ ॥

अभि । त्रिऽपृष्ठं । वृषणं । वयःऽधां । आंगूषाणां । अवावशंत । वाणीः । वना । वसानः । वरुणः । न । सिंधून् । वि । रत्नऽधाः । दयते । वार्याणि ॥

पदार्थः—(त्रिपृष्ठं) त्रियज्ञवद्ब्रह्मचर्य्यं सम्पादयन् (वृषणं) बलशीलकर्म्मयोगिन उपदेशाय त्वं ( वयोधां ) बलधारकः ( आंगूषाणां ) बलप्रदवाण्याः प्रयोजकश्चास्ति । एवं स्तोतृवाण्यां ( अवावशन् ) निवसन् त्वं ( वना, वसानः ) सर्वप्रकाराः सूक्ष्म शक्तीर्धारयन् (वरुणः) सर्वान् स्वशक्त्याऽऽच्छादयन् ( सिन्धून्, न ) समुद्रतुल्यः ( विरत्नधाः ) अनेकविधरत्नानि धारयन् त्वं ( वार्य्याणि ) उत्तमधनानि ( दयते ) कर्म्मयोगिभ्यो ददासि ।

पदार्थ—( त्रिपृष्ठं ) तीनों सवनोंवाले ब्रह्मचर्यको करते हुए ( वृषणं ) बलशील कर्मयोगीके उपदेशके लिये आप ( वयोधां ) बलको धारण करानेवाले ( आंगूषाणां ) बलदायक वाणी के प्रयोग करने वाले हैं ऐसेस्तोता लोगोंकी वाणीमें ( अवावशत ) निवास करते हुए (वनावसानः)

सब प्रकारकी सूक्ष्मशक्तियोंको धारण करते हुए ( वरुणः ) सबको स्वशक्तिसे आच्छादन करते हुए और ( सिंधून् न ) समुद्रके समान ( विरत्नधाः ) नानाप्रकारके रत्नोंको धारण करते हुए आप ( वार्याणि ) उत्तमधनोंको ( दयते ) कर्मयोगियोंके लिये देते हैं ।

भावार्थ—यहां तीनों प्रकारके ब्रह्मचर्यका वर्णन अर्थात ब्रह्मचर्य्य प्रथम २४ वें वरसतक दूसरा ३६ और तीसरा ४० इनको प्रथम मध्यम उत्तम कहते हैं जो पुरुष उक्तप्रकारके ब्रह्मचर्योंको धारण करते हैं उनको परमात्मा सबप्रकारके ऐश्वर्य प्रदान करता है ॥

शूरग्रामः सर्ववीरः सहावाञ्जेता
पवस्व सनिता धनानि । तिग्मायुधः
क्षिप्रधन्वा समत्स्वषाळ्हः
साह्वान्पृतनासु शत्रून् ॥ ३ ॥

शूरऽग्रामः । सर्वऽवीरः । सहावान् । जेता । पवस्व । सनिता । धनानि । तिग्मऽआयुधः । क्षिप्रऽधन्वा । समत्ऽसु । अषाळ्हः । सह्वान् । पृतनासु । शत्रून् ॥

पदार्थः—( शूरग्रामः ) यः शूरवीराणा स्वामी ( सर्ववीरः ) स्वयमपि सर्वप्रकारेणवीरश्चास्ति अपिच ( सहावान् ) धैर्य्यवान् ( जेता ) तथा सर्वजेता अस्ति ( सनिता ) यश्चैश्वर्यो-पार्जने लग्नः तम् ( पवस्व ) त्वं रक्ष । त्वं ( तिग्मायुधः ) तीक्ष्णशस्त्रवान् ( क्षिप्रधन्वा ) शीघ्रगतिश्चासि । अन्यच्च ( समत्सु ) संग्रामे [ अषाव्हः ] परशक्त्यसहनशीलः,

[ पृतनासु ] प्रधानसेनायां [ सव्हान् ] धुरन्धराणां [शत्रूणाम् ] रिपूणाञ्जेताचासि ।

पदार्थ—( शूरग्रामः ) जो शूरवीरोंके समुदायवाले हैं (सर्ववीरः) और स्वयं भी सब प्रकारसे वीर हैं और ( सहावान ) धैर्यवान् हैं । तथा ( जेता ) सबको जीतनेवाले हैं ( धनानि सनिता ) और जो ऐश्वर्योंपार्जनमें लगे हुए हैं उनको आप ( पवस्व ) पवित्र करें । आप ( तिग्मायुधः ) तीक्ष्ण शस्त्रोंवाले हैं और ( क्षिप्रधन्वा ) शीघ्रगतिशस्त्रोंवाले हैं । और ( समत्सु ) संग्राममें ( अषाह्ळः ) परशक्ति को न सहनेवाले हैं । और (पृतनासु) परसेनामें ( सह्वान् ) धुरन्धर ( शत्रून् ) शत्रुओंके ( जेता ) जीतनेवाले हैं ॥

भावार्थ—यहां परमात्माका रुद्रधर्मका निरूपण किया रुद्रधर्मको धारण करनेवाला परमात्मावीरोंके अनन्त, सङ्घों में शक्ति उत्पन्न करके संसारसे पापकी निवृत्ति करता है । उस अनन्त शक्तियुक्त परमात्माके अतितीक्ष्ण शस्त्र हैं जिससे वह अन्यायकारियोंकी सेनाको विदीर्ण करता है॥

उरुगंव्यूतिरभयानि
कृण्वन्त्समीचीने आ पवस्वा पुरन्धी ।
अपः सिषासन्नुषसः स्वर्गाः
सं चिक्रदो महो अस्मभ्यं वाजान् ॥ ४ ॥

उरुऽगव्यूतिः । अभयानि । कृण्वन् । समीचीने इति । संऽईचीने । आ । पवस्व । पुरंधी इति पुरंधी । अपः । सिसासन् । उषसः । स्वः । गाः । सं । चिक्रदः । महः । अस्मभ्यं । वाजान् ॥

पदार्थः—(ऊरु गव्यूतिः) विस्तृतमार्गवांस्त्वं (समीचीने) धर्म्ममार्गे (अभयानि कृण्वन्) अभयं प्रददत् (आपवस्व) मां पवित्रय। त्वं (पुरंधी) सर्वजगद्धारकोऽसि। अपिच (अपः) शुभकर्म्माणि (सिषासन्) शिक्षयन् (उषसः) प्रातःकालस्य (स्वर्गाः) किरणान् (संचिक्रदः) निजवैदिकशब्दैर्विस्तारयसि। (महः) हे सर्वपूज्यपरमात्मन्! (अस्मभ्यं) अस्माकं (वाजान्) बलानि देहि।

पदार्थ—(उरुगव्यूतिः) विस्तृत मार्गोंवाले आप (समीचीने) धर्मकी राहमें (अभयानि कृण्वन्) अभय प्रदान करते हुए (आपवस्व) हमको पवित्र करें। आप (पुरुन्धी) सम्पूर्ण संसारके धारण करनेवाले हैं। और (अपः) शुभ कर्मोंकी (सिषासन्) शिक्षा करते हुए (उषसः) उषाकालकी (स्वर्गाः) रश्मियोंको (संचिक्रदः) अपने वैदिक शब्दोंसे विस्तृत करते हैं (महः) हे सर्वपूज्यपरमात्मन्! अस्मभ्यं) हमको (वाजान्) बलोंको दें।

भावार्थ—जो लोग परमात्माके उपदेश किये हुये शुभमार्गों पर चलते हैं परमात्मा उनको शुभमार्गोंकी प्राप्ति कराता है।

मत्सि सोम वरुणं मत्सि मित्रं
मत्सीन्द्रमिन्दो पवमान विष्णुम्।
मत्सि शर्धो मारुतं मत्सि
देवान्मत्सि महामिन्द्रमिन्दो मदाय॥ ५॥

मत्सि। सोम। वरुणं। मत्सि। इंद्रं। इंदो इति। पवमान।

विष्णुं । मत्सि । शर्धः । मरुतं । मत्सि । देवान् । मत्सि । महां । इन्द्रं । इंदो इति । मदाय ॥

पदार्थः—( सोम ) हे परमात्मन् ! ( वरुणम् ) सर्वाच्छादनशक्तिधारिणं विद्वांसम् त्वम् ( मत्सि ) तर्पय आपिच ( मित्रम् ) स्नेहशक्तिमन्तं विद्वांसम् ( मत्सि ) तर्पय, ( इन्दो ) हे प्रकाशस्वरूपपरमात्मन् ! ( विष्णुम् ) सर्वासु विद्यासु व्याप्तिशीलं विद्वांसम्, किञ्च ( इन्द्रम् ) कर्मयोगिनम्, पवित्रय, ( पवमान ) हे सर्वपावनपरमात्मन् ! ( मरुतम् ) पूर्वोक्तानां विदुषां समुदायम्, ( मत्सि ) तर्पय ( शर्धः ) रुद्ररूपो योविदुषां गणस्तम्, ( मत्सि ) तर्पय, ( देवान् ) शान्त्यादिदिव्यगुणवतोविदुषः ( मत्सि ) तर्पय, ( इन्दो ) हे प्रकाशस्वरूपपरमेश्वर ! ( इन्द्रम् ) कर्मयोगिनम्, नित्यार्चनीयस्त्वम् ( मदाय ) आनन्दाय ( मत्सि ) तर्पय, ।

पदार्थ—( सोम ) हे परमात्मन् ! ( वरुणं ) सबको आच्छादन करनेकी शक्ति रखनेवाले विद्वानको आप ( मत्सि ) तृप्त करें । ( मित्रं ) और स्नेहकी शक्ति रखनेवाले विद्वान्को ( मत्सि ) तृप्त करें । ( इन्दो ) हे प्रकाशस्वरूपपरमात्मन् ( पवमान ) सबको पवित्र करनेवाले ! परमात्मन् ! ( विष्णुं ) सब विद्याओंमें व्याप्तिशील विद्वानको और ( इन्द्रं ) कर्मयोगीको ( मत्सि ) तुम तृप्त करो । ( शर्धः ) रुद्ररूप जो विद्वानोंका गण है उसे ( मत्सि ) तृप्त करें ( देवान् ) शान्त्यादि दिव्यगुणयुक्त विद्वानोंको ( मत्सि ) तृप्त करें ( इन्दो ) हे प्रकाशस्वरूपपरमेश्वर ! ( महां ) सर्व पूज्य आप ( मदाय ) आनन्दके लिये ( इन्द्रं ) कर्मयोगी को ( मत्सि ) तृप्त करें ।

भावार्थ—इस मन्त्रमें कर्मयोगीके क्रिया कौशल्यकी पूर्तिके लिये परमात्मासे प्रार्थनाकी गई है कि हे परमात्मन् ! आप कर्मयोगीको सब प्रकारसे निपुण करिये ।

एवा राजेव क्रतुमाँ अमेन
विश्वा घनिघ्नद्दुरिता पवस्व ।
इन्दो सूक्ताय वचसे वयोधा
यूयं पात स्वस्तिभिः सदा नः ॥ ६ ॥ २६ ॥

एव । राजाऽइव । क्रतुऽमान् । अमेन । विश्वा । घनिघ्नत् । दुःऽइता । पवस्व । इंदोइति । सुऽउक्ताय । वचसे । वयः । धाः । यूयं । पात । स्वस्तिऽभिः । सदा । नः ॥

पदार्थः—हे परमात्मन् ! त्वम् ( राजेव ) सर्वप्रकाशकः सर्वस्वामीचासि ( क्रतुमान् ) कर्मणामधिष्ठाताऽसि ( विश्वा, अमेन ) सम्पूर्णेन बलेन ( दुरिता, घनिघ्नत् ) सर्वाण्यपि पापानि दूरीकुर्वन्, त्वम् ( पवस्व ) अस्मान् पवित्रय ( इन्दो ) हे प्रकाशस्वरूपपरमात्मन् ! ( सूक्ताय, वचसे ) शोभनानां वाणीनामभिधानाय ( वयोधाः ) ऐश्वर्यं धेहि ( यूयम् ) त्वम्, ( स्वस्तिभिः ) कल्याणकारिभिर्भावैः ! ( सदा ) सदैव ( नः ) अस्मान् ( पात ) रक्ष ।

पदार्थ—हे परमात्मन् ! ( राजेव ) आप सबको प्रदीप्त करनेवाले और सर्वस्वामी हैं।( क्रतुमान् ) कर्मोंके अधिष्ठाता हैं ( विश्वा, अमेन ) सम्पूर्ण

वलसे ( दुरिता, घानिघ्नत् ) समस्त पापोंको दूर करतेहुए ( पवस्व ) हमको पवित्र करें ( इन्दो ) हे प्रकाशस्वरूपपरमात्मन् ! (सूक्ताय वचसे) सुन्दरवाणियों के कथन करनेको ( वयोधाः ) ऐश्वर्य देनेवाले ( यूयं ) आप ( स्वस्तिभिः ) कल्याणकारी भावोंसे ( सदा ) सदैव ( नः ) हमको ( पात, ) पवित्र करें ।

**भावार्थ**—इसमें परमात्मासे कल्याणकी प्रार्थना कीगई ।

इति नवतितमं सूक्तंषड्विंशोवर्गश्च समाप्तः ।

यह ९० वां सूक्त और २६ वां वर्ग समाप्त हुआ ॥

इति श्रीमदार्यमुनिनोपनिबद्धे ऋक्संहिताभाष्येसप्तमाष्टके तृतीयोऽध्यायः समाप्तः ।

अथैकनवतितमस्य षड्ऋचस्य सूक्तस्य—

१—६ कश्यप ऋषिः ॥ पवमानः सोमो देवता ॥
छन्दः—१, २, ६ पादनिचृत्त्रिष्टुप् । ३ त्रिष्टुप् ।
४, ५ निचृत्त्रिष्टुप् ॥ धैवतः स्वरः ॥

अब चिरजीवी होनेका कथन करते हैं—

असर्जि वक्वा रथ्ये यथाजौ
धिया मनोता प्रथमो मनीषी ।
दश स्वसारो अधि सानो अव्येऽ
जन्ति वह्निं सदनान्यच्छ ॥ १ ॥

असर्जि । वक्वा । रथ्ये । यथा । आजौ । धिया । मनोता ।

प्रथमः । मनीषी । दश । स्वसारः । अधि । सानौ । अव्ये । अजंति । वह्निं । सदनानि अच्छ ॥

पदार्थः—( मनीषी ) योहि मनुष्यः परमात्मपरायणः किञ्च गुणेषु प्रशस्ततया ( प्रथमः ) मुख्योस्ति, ( मनोता ) यश्च सर्वप्रियः सः ( धिया ) स्वकीयया बुद्ध्या ( आजौ ) आध्यात्मिके यज्ञे ज्ञानाहुतिं प्रदद्यात् ( यथा ) यथा कर्मरूपे यज्ञे ( वक्ता ) वक्ता पुरुषोबाणीरूपकर्म ( असर्जि ) विदधाति, ( अव्ये, अधिसानौ ) सर्वरक्षकपरमात्मरूपे यज्ञकुण्डे ( दश स्वसारः ) दश प्राणाः प्राणायामरूपयज्ञं कुर्वन्ति ।

पदार्थ—( मनीषी ) जो परमात्मपरायण पुरुष है । और ( प्रथमः ) गुणोंमें श्रेष्ठ होनेसे मुख्य है । ( मनोता ) जो सर्वप्रिय है । वह ( धिया ) अपनी बुद्धिसे ( आजौ ) आध्यात्मिकयज्ञमें ज्ञानकी आहुति प्रदान करे । ( यथा ) जैसे ( रथ्ये ) कर्म्मरूपीयज्ञमें ( वक्ता ) वक्ता पुरुष वाणीरूपी कर्म्मको ( असर्जि ) करता है । ( अव्येऽ ( धिसानौ ) सर्वरक्षकपरमात्मरूप यज्ञकुण्डमें ( दश स्वसारः ) दश प्राणों को ( अधि ) उक्त यज्ञके विषयमें ( अजन्ति ) डालते हैं । जिस प्रकार ( सदनानि ) सुन्दरवेदिओंके ( अच्छ ) प्रति ( वह्निं ) वाह्निको लक्ष्य बनाकर हवन कियाजाता है । इस प्रकार आध्यात्मिकयज्ञमें परमात्माको वाहिस्थानीय बनाकर हवन कियाजाता है ।

भावार्थ—इस मन्त्रमें प्राणायामका वर्णन किया है जो लोग भलीभांति प्राणायाम करते हैं वे आध्यात्मिकयज्ञ करते हैं ।

वीती जनस्य दिव्यस्य कव्यैरधि
सुवानो नहुष्येभिरिन्दुः ।

प्र यो नृभिरमृतो मर्त्येभिर्म—
र्मृजानोऽविभिर्गोभिरद्भिः ॥ २ ॥

वीती । जनस्य । दिव्यस्य । कव्यैः । अधि । सुवानः । नहुष्ये-
भिः । इंदुः । प्र । यः । नृऽभिः । अमृतः । मर्त्येभिः ।
मर्मृजानः । अविऽभिः । गोभिः । अप्ऽभिः ॥

पदार्थः—( अद्भिः ) कर्मभिः 'अपइति कर्मनामसु पठितम्' नि०—२—१—( गोभिः ) ज्ञानद्वारा ( अविभिः ) रक्षया ( मर्मृजाानः ) संशोध्यमानः एवम्भूतः ( मर्त्येभिर्नृभिः ) मनुष्यैः क्रियमाणः ( अमृतः ) अमृतरूपो भवति, योयज्ञः ( दिव्यस्य जनस्य ) ज्ञानिनः पुरुषस्य ( कव्यैः ) हवनैः ( अधिसुवानः ) प्रादुर्भूतः सन् ( इन्दुः ) दीप्तिशाली भवति, किञ्च ( वीती ) देवमार्गाय भवति, यश्चोक्तयज्ञः सः ( नहुष्येभिः ) मानवैर्विधीयमानः शोभनफलवान् भवति ।

पदार्थ—( अद्भिः ) कर्म्मोंके द्वारा "अपइति कर्म्मनामसु" पठितम्-निघण्टौ—२—१ ( गोभिः ) ज्ञानके द्वारा ( अविभिः ) रक्षासे ( मर्मृजानः ) जिसका संशोधन किया गया है । ऐसा यज्ञ ( मर्त्येभिर्नृभिः ) मनुष्यों से किया हुआ ( अमृतः ) अमृत होता है । जो यज्ञ ( दिव्यस्यजनस्य ) ज्ञानी पुरुष के ( कव्यैः ) हवनोंके द्वारा ( अधिसुवानः ) उत्पन्न हुआ ( इन्दुः ) दीप्तिवाला होता है । और ( वीती ) देवमार्गके लिये होता है और यह उक्त यज्ञ ( नहुष्येभिः ) मनुष्योंके द्वारा किया हुआ उत्तम फलवाला होता है ।

भावार्थ—जो लोग सत्कर्मोंके द्वारा कर्मयज्ञका सम्पादन करते हैं वे उत्तम सुखके भागी होते हैं ।

वृषा वृष्णे रोरुवदंशुरस्मै
पवमानो रुशदीर्ते पयोगोः ।
सहस्रमृक्वा पथिभिर्वचोविदध्व-
स्मभिः सूरो अण्वं वि याति ॥ ३ ॥

वृषा । वृष्णे । रोरुवत् । अंशुः । अस्मै । पवमानः । रुशत् । ईर्ते । पयः । गोः । सहस्रं । ऋक्वा । पथिऽभिः । वचःऽवित् । अध्वस्मऽभिः । सूरः । अण्वं । वि । याति ॥

पदार्थः—( वृषा ) कामनां वर्षुकः परमात्मा ( वृष्णे ) कर्मयोगिने ( रोरुवत् ) अतितरां शब्दायमानः ( अस्मै ) अस्मै कर्मयोगिने ( अंशुः ) सर्वव्यापकः, अपिच ( पवमानः ) सर्वपावकः परमात्मा ( रुशत् ) दीप्तिं ददत् ( गोः ) इन्द्रियाणाम् ( पयः ) सारभूतज्ञानम् ( ईर्ते ) प्राप्नोति येन ( सहस्रं-ऋक्वा ) बहुविधाना वाणीना वक्ता ( वचोवित् ) वाणीनाञ्ज्ञाता ( पथिभिः ) वाणीनां मार्गैः, ये खलु ( अध्वस्माभिः ) हिंसारहितास्तैः ( सूरः ) विज्ञानी ( अण्वम् ) सूक्ष्मपदार्थानां तत्त्वम् ( वियाति ) प्राप्नोति ।

पदार्थ—( वृषा ) कामनाओंकी वृष्टि करनेवाला परमात्मा ( वृष्णे ) कर्म्मयोगीके लिये ( रोरुवद् ) अत्यन्त शब्द करता हुआ

( अस्मै ) इस कर्म्मयोगीके लिये ( अंशुः ) सर्वव्यापक और ( पवमानः ) सर्वको पवित्र करनेके लिये परमात्मा ( रुशद् ) दीप्ति देता हुआ ( गोः ) इन्द्रियोंके ( पयः ) सारभूत ज्ञानको ( ईर्ते ) प्राप्त होता है। जिस से ( सहस्रं ऋक्वा ) अनन्त प्रकारकी वाणियोंका वक्ता ( वचोवित् ) वाणियोंका ज्ञाता ( पथिभिः ) वाणियोंकी रास्तेसे जो ( अध्वस्माभिः ) हिंसारहित हैं। ( सूरः ) विज्ञानी ( अण्वं ) सूक्ष्म पदार्थोंके तत्वको ( वियाति ) प्राप्त होता है।

**भावार्थ**—जो लोग वेदवाणियोंका अभ्यास करते हैं वे सूक्ष्मसे सूक्ष्म पदार्थोंको प्राप्त होते हैं।

रुजा दृळ्हा चिद्रक्षसः सदांसि
पुनान इन्द्र ऊर्णुहि वि वाजान्।
वृश्चोपरिष्टात्तुजता वधेन ये
अन्ति दूरादुपनायमेषाम् ॥ ४ ॥

रुज । दृळ्हा । चित् । रक्षसः । सदांसि । पुनानः । इंदो इति । ऊर्णुहि । वि । वाजान् । वृश्च । उपरिष्टात् । तुजता । वधेन । ये । अंति । दूरात् । उपऽनायं । एषां ॥

**पदार्थः**—अपिच स कर्मयोगी ( रक्षसः ) राक्षसानाम् ( दृळहासदांसि ) दृढसमितीः ( चित् ) अपि ( रुजा ) आत्मीयनाशकशक्त्या विनाशयति, अपिच ( विवाजान् ) न्यायकारिणाम् बलशालिनां पुरुषाणां शक्तीः ( इन्दो ) हे प्रकाश स्वरूपपरमात्मन्! त्वम् ( ऊर्णुहि ) आच्छादय, किञ्च

( उपरिष्टात् ) उपरिष्टात् ( ये दूरात् ) दूरदेशाद्वाऽऽगच्छन्ति ( एषाम् ) एषां राक्षसानाम् ( उपनायम् ) स्वामिनम् ( तुजताव-धेन ) तीक्ष्णेन शस्त्रेण विनाशय ।

पदार्थ—और वह कर्म्मयोगी ( रक्षसः ) राक्षसोंकी ( दृळ्हासदांसि ) दृढ़सभाओंको ( चिद् ) भी ( रुजा ) अपनी नाशकशक्तिसेनष्ट करदेता है । और ( विवाजान् ) न्यायकारी बलयुक्त पुरुषोंकी शक्तियोंको ( इन्दो ) हे प्रकाशमान परमात्मन् ! तुम ( ऊर्णुहि ) आच्छादन करो । और ( उपरिष्टात् ) जो ऊपरकी ओरसे आते हैं । अथवा ( दूरात् ) दूरदेशसे जो आते हैं । ( एषां ) इन राक्षसोंके ( उपनायं ) स्वामीको ( तुजता वधेन ) तीक्ष्णवधसे नाश करो ।

भावार्थ—जो पुरुष शमदमादि साधनसम्पन्न होकर परमात्मपरायण होते हैं परमात्मा उनके सब विघ्नोंको दूर करता है और उनके विघ्नकारी राक्षसोंको दमन करके उनके मार्गको सुगम करता है ।

स प्रत्नवन्नव्यसे विश्ववार
सूक्ताय पथः कृणुहि प्राचः ।
ये दुःषहासो वनुषा बृहन्तस्तांस्ते
अश्याम पुरुकृत्पुरुक्षो ॥ ५ ॥

सः । प्रत्नऽवत् । नव्यसे । विश्वऽवार । सुऽउक्ताय । पथः । कृणुहि । प्राचः । ये । दुःऽसहासः । वनुषा । बृहन्तः । तान् । ते । अश्याम । पुरुऽकृत् । पुरुक्षो इति । पुरुऽक्षो ।

पदार्थः—( विश्ववार ! ) हे विश्ववरणीय परमात्मन् !

( सप्रत्नवत् ) पुरातनस्त्वम् ( नव्यसे ) अस्मन्नवीनजन्मने ( प्राचः पथः ) प्राचीनान्मार्गान् ( सूक्ताय, कृणुहि ) सरलान्विधेहि, किञ्च ( पुरुकृत् ) हे बहुकर्मकारिन् ! ( पुरुक्षाः ) हे शब्दब्रह्मजनकपरमात्मन् ! ये तव स्वभावाः ( ये, दुःसहासः ) राक्षसैरसोढव्याः पुनश्च ( वनुषा ) हिंसास्वरूपाः पुनः कीदृशाः ! ( बृहन्तः ) महान्तः तान् ( ते ) पूर्वोक्तास्ते स्वभावान् वयं ( अश्याम ) प्राप्नुयाम ।

पदार्थ—( विश्ववार ) हे विश्ववरणीयपरमात्मन् ! ( सप्रत्नवत् ) आप प्राचीन हैं । ( नव्यसे ) हमको नूतन जन्म देनेके लिये हमारेलिये ( प्राचः, पथः ) प्राचीन रास्तोंको ( सूक्ताय कृणुहि ) सरल कीजिये । ( पुरुकृत् ) हे बहुत कर्म्म करनेवाले ( पुरुक्षाः ) हे शब्दब्रह्मके उत्पादकपरमात्मन् ! ( ये दुःसहासः ) जो राक्षसोंके सहने योग्य नहीं ( वनुषा ) और जो हिंसारूप हैं ( बृहन्तः ) बड़े हैं । ( तान् ) उन ( ते ) तुम्हारे भावोंको यज्ञमें ( अश्याम ) हम प्राप्त हों ।

भावार्थ—परमात्माके स्वभाव अर्थात् परमात्माके सत्यादि धर्मोंको राक्षसलोग धारण नहीं करसकते उनको केवल दैवीसम्पतिवाले ही धारण करसकते हैं अन्य नहीं इस मन्त्रमें देवभावके दिव्यगुणोंका और राक्षसोंके दुर्गुणोंका वर्णन है ।

एवा पुनानो अपः स्वर्गा
अस्मभ्यं तोका तनयानि भूरि ।
शं नः क्षेत्रमुरु ज्योतींषि सोम
ज्योङ्नः सूर्यं दृशये रिरीहि ॥ ६ ॥ १ ॥

एव । पुनानः । अपः । स्वः । गाः । अस्मभ्यं । तोका । तनयानि । भूरिं । शं । नः । क्षेत्रं । उरु । ज्योतींषि । सोम । ज्योक् । नः । सूर्यं । दृशये । रिरीहि ॥

पदार्थः—हे परमात्मन् ! ( एवपुनानः ) अनेन प्रकारेण पवित्रयँस्त्वम् ( अपः ) अन्तरिक्षम् ( स्वः ) स्वर्गलोकम् ( गाः ) पृथिवीलोकञ्च ( अस्मभ्यम् ) अस्मभ्यम्, देहि ( तोका) पुत्रान् ( भूरि ) प्रचुरान् ( तनयानि ) पौत्रांश्च वितर, किञ्च ( नः ) अस्मभ्यम् ( शम् ) कल्याणं भवेत् ( उरुक्षेत्रम् ) विस्तृतानि क्षेत्राणि च स्युः ( सोम ) हे परमात्मन् ! ( उरु, ज्योतींषि ) भूयांसि तेजांसि ( नः ) अस्मदर्थं सन्तु, किञ्च हे परमात्मन्, ( ज्योक् ) चिरकालपर्य्यन्तम् ( सूर्यं दृशये ) तेजोमयामिमं सूर्य्यमाभिविलोकयितुम् ( रिरीहि ) अस्मान् सामर्थ्यशालिनः कुरु ।

पदार्थ—हे परमात्मन् । ( एवपुनानः ) इस प्रकार पवित्र करते हुए आप ( अपः ) अन्तरिक्षलोक ( स्वर् ) स्वर्गलोग और ( गाः ) पृथिवीलोक ( अस्मभ्यं ) हमारे लिये दें । ( तोका) पुत्र और ( तनयानि ) पौत्र ( भूरि ) बहुतसे प्रदान करें । और ( नः ) हमारे लिये ( शं ) कल्याण हों । ( उरुक्षेत्रं ) और विस्तृत क्षेत्र हों । ( सोम ) हे परमात्मन् ! ( उरु ज्योतींषि ) बहुतसी ज्योतियें ( नः ) हमारेलिये हों । और ( ज्योक् ) चिरकालतक ( सूर्य्यं दृशये ) इस तेजोमय सूर्य्यके देखनेके लिये ( रिरीहि ) सामर्थ्ययुक्त बनायें ।

भावार्थ—जो लोग ईश्वरकी आज्ञाको पालन करते हैं परमात्मा उनके लिये सबप्रकारके ऐश्वर्य प्रदान करता है ।

इत्येकनवतितमंसूक्तं प्रथमो वर्गश्च समाप्तः ॥

अथषड्ऋचस्य द्विनवतितमस्य सूक्तस्य—

॥ ९२ ॥ १—६ कश्यप ऋषिः ॥ पवमानः सोमो देवता ॥ छन्दः—१ भुरिक् त्रिष्टुप् । २, ४, ५ निचृत्त्रिष्टुप् । ३ विराट्त्रिष्टुप् । ६ त्रिष्टुप् धैवतः स्वरः ॥

परि॑ सुवा॒नो हरि॑रं॒शुः प॒वित्रे॒
रथो॒ न स॑र्जि स॒नये॑ हिया॒नः ।
आप॒च्छ्लोक॑मिन्द्रि॒यं पू॒यमा॑न॒ः प्रति॑
दे॒वाँ अ॑जुषत॒ प्रयो॑भिः ॥ १ ॥

परि॑ । सु॒वानः॑ । हरिः॑ । अं॒शुः । प॒वित्रे॑ । रथः॑ । न । स॒र्जि॒ । स॒नये॑ । हि॒या॒नः । आप॑त् । श्लोक॑म् । इ॒न्द्रि॒यम् । पू॒यमा॑नः । प्रति॑ । दे॒वान् । अ॒जु॒ष॒त॒ । प्रयः॑ऽभिः ॥

पदार्थः—( सुवानः ) सर्वव्यापकः ( हरिः ) हरणशीलः ( अंशुः ) अश्नुते सर्वत्रेत्यंशुः । सूत्रात्मा परमात्मा ( पवित्रे ) विशुद्धान्तःकरणे ( रथोन ) गतिशीलपदार्थाइव ( परिसर्जि ) साक्षात्क्रियते, यः परमात्मा ( सनये ) उपासनार्थम् ( हियानः ) प्रेरयति जनानिति शेषः यः परमात्मा ( इन्द्रियम् ) कर्मयोगिनं ( श्लोकम् ) शब्दसमुदायम् ( आपत् ) जनयति पुनश्च कीदृशः सः परमात्मा ( पूयमानः ) सर्वपावकः ( प्रयोभिः )

निजैराशीर्वादैः ( देवान्, प्रति ) देवेभ्यः विद्वद्भ्यइत्यर्थः —( अजुषत ) स्नेहमुत्पादयति ॥

**पदार्थ**—( सुवानः ) सर्वव्यापकः ( हरिः ) हरणशील ( अंशुः ) सूत्रात्मा परमात्मा ( पवित्रे ) पवित्रअन्तःकरणमें ( रथोन ) गतिशील-पदार्थोंके समान ( परिसर्जि ) साक्षात्कार कियाजाता है ( सनये ) जो परमात्मा उपासनाके लिये ( हियानः ) प्रेरणा करता है । और ( इन्द्रियम् ) कर्म्मयोगीको ( श्लोकं ) शब्द संघातको ( आपत् ) उत्पन्न करता है ( पूयमानः ) सबको पवित्र करनेवाला परमात्मा ( प्रयोभिः ) अपने आशीर्वादोंसे ( देवान्, प्रति ) देवतावोंके लिये ( अजुषत ) प्रेमको उत्पन्न करता है ।

**भावार्थ**—जो लोग शुद्ध अन्तःकरणसे परमात्माकी उपासना करते हैं परमात्मा उनके अन्तःकरणमें पवित्रज्ञान प्रादुर्भूत करता है ॥

अच्छा नृचक्षा असरत्पवित्रे
नाम दधानः कविरस्य योनौ ।
सीदन्होतेव सदने चमूषू-
पेमग्मन्नृषयः सप्तविप्राः ॥ २ ॥

अच्छ । नृऽचक्षाः । अचरत् । पवित्रे । नाम । दधानः । कविः । अस्य । योनौ । सीदन् । होताऽइव । सदने । चमूषु । उप । ईं । अग्मन् । ऋषयः । सप्त । विप्राः ।

**पदार्थः**—( नृचक्षाः ) सर्वद्रष्टा ( कविः ) सर्वज्ञश्च

( नामदधानः ) इत्यादि नामानि धारयन् परमात्मा ( अस्ययोनौ ) कर्मयोगिनोऽन्तःकरणे ( पवित्रे ) बहुभिः साधनैः पवित्रतां प्राप्तं तस्मिन् ( अच्छा, सरत् ) सम्यक् प्राप्नोति ( होतेव ) यथा होता ( सदने ) यज्ञे ( सीदन् ) आगच्छन् ( चमूषु ) बहुषु समुदायेषु स्थिरो भवति एवमेव ( उपेम् ) अस्य समीपे ( सप्तर्षयः ) मनोबुद्धी पञ्च प्राणाश्च ये ( विप्राः ) मानवान्पवित्रयन्तिते समागत्य प्राप्नुवन्ति ।

पदार्थ—( नृचक्षाः ) सव काद्रष्टा ( कविः ) और सर्वज्ञ ( नामदधानः ) इत्यादिनामोंको धारणकरनेवाला परमात्मा ( अस्य, योनौ ) कर्म्मयोगीके अन्तःकरणमें ( पवित्रे ) जो साधनों द्वारा पवित्रताको प्राप्त है । उसमें ( अच्छासरत् ) भलीभाँति प्राप्त होता है । ( होतेव ) जिसप्रकार होता ( सदने ) यज्ञमें ( सीदन् ) प्राप्त होता हुआ ( चमूषु ) वहुतसे समुदायोंमें स्थिर होता है । इसीप्रकार ( उपेम् ) इसके समीप ( सप्तर्षयः ) पांचप्राण, मन, और बुद्धि ( विप्राः ) जो मनुष्यको पवित्रकरनेवाले हैं वह आकर प्राप्तहोते हैं ।

भावार्थः—जो पुरुष कर्मयोगी है उसके पाचों प्राण मन तथा बुद्धि वशीकृत होती है । उक्तसाधनों द्वारा परमात्माका अपने अन्तःकरणमें साक्षात्कार करता है ।

प्र सुमेधा गातुविद्विश्वदेवः
सोमः पुनानः सद एति नित्यम् ।
भुवद्विश्वेषु काव्येषु रन्तानु
जनान्यतते पञ्च धीरः ॥ ३ ॥

प्र । सुऽमेधाः । गातुऽवित् । विश्वऽदेवः । सोमः । पुनानः । सदः । एति । नित्यं । भुवत् । विश्वेषु । काव्येषु । रंता । अनु । जनान् । यतते । पंचधीरः ॥

पदार्थः—( सुमेधाः ) शोभनप्रज्ञावान्, अपिच ( गातु-वित् ) मार्गज्ञः ( विश्वदेवः ) यस्य ज्ञानं सर्वत्र विद्यते (सोमः) सर्वोत्पादकः परमात्मा ( पुनानः ) सर्वाञ्जनान्पवित्रयन् (नित्यम्) सदैव ( सदः ) तास्मिन् स्थाने ( एति ) प्राप्नोति यस्मिन्स्थाने ( विश्वेषु काव्येषु ) सर्वप्रकारास्वपि रचनासु ( रन्ता ) रमणकर्त्ता योगी ( पञ्चधीरः ) पञ्चविधान् (जनान्) प्राणान् ( अनुयतते ) युनक्ति योजयित्वा च प्राणायामं विधाय ( भुवत् ) रमणशीलो भवति ।

पदार्थ—( सुमेधाः ) शोभन प्रज्ञावाला और ( गातुवित् ) मार्गके जाननेवाला ( विश्वदेवः ) जिसका ज्ञान सर्वत्र विद्यमान है । ( सोमः ) सर्वोत्पादक परमात्मा ( पुनानः ) सबको पवित्र करता हुआ परमात्मा ( नित्यं ) सदैव (सदः) उस स्थानको (एति) प्राप्त होता है । जिस स्थानमें ( विश्वेषुकाव्येषु ) सम्पूर्ण प्रकारकी रचनाओंमें ( रन्ता ) रमण करनेवाला योगी ( पञ्चधीरः ) पांचप्रकारके ( जनान् ) प्राणोंको ( अनुयतते ) लगाता है । और लगाकर अर्थात्प्राणायाम करके ( भुवत् ) रमणशील होता है ।

भावार्थ—योगीपुरुष प्राणायामद्वारा परमात्माका साक्षात्कार करता है इसी अभिप्रायसे यह कथन किया है कि योगीको परमात्मा प्राप्त होता है वास्तवमें परमात्मा सर्वव्यापक है उसका जाना आना कहीं नहीं होता ।

तव त्ये सोम पवमान निण्ये
विश्वे देवास्त्रय एकादशासः ।
दश स्वधाभिरधि सानो अव्ये
मृजन्ति त्वा नद्यः सप्त यह्वीः ॥ ४ ॥

तव । त्ये । सोम । पवमान । निण्ये । विश्वे । देवाः । त्रयः । एकादशासः । दश । स्वधाभिः । अधि । सानौ । अव्ये । मृजंति । त्वा । नद्यः । सप्त । यह्वीः ॥

पदार्थः—( विश्वेदेवाः ) सर्वे देवाः ( त्रयएकादशासः ) त्रयस्त्रिंशत्संख्याकाः सन्ति ते ( निण्ये ) अन्तरिक्षे विद्यन्ते ( सोम ) हे सर्वोत्पादकपरमात्मन् ! ( त्ये ) ते ( तव ) तुभ्यम् ( दशस्वधाभिः ) पञ्चानांसूक्ष्मभूतानां पञ्चनांस्थूलभूतानाञ्च (स्वधाभिः ) सूक्ष्माभिः शक्तिभिः ( अधिसानौ ) त्वदीये सर्वश्रेष्ठ स्वरूपे ( अव्ये ) यत्खलु सर्वपालकं विद्यते तस्मिन् ( मृजन्ति ) संशोधयन्ति अपि च ( त्वाम् ) त्वां ( सप्त यह्वीः, नद्यः ) याः किल वृहत्तराः सप्त नाड्यः सन्ति ताभिः, प्राप्नुवन्ति ।

पदार्थ—( विश्वेदेवाः ) सम्पूर्ण देव जो ( त्रय एकादशासः ) ३३ हैं । वे ( निण्ये ) अन्तरिक्षमें वर्तमान हैं । ( सोम ) हे सर्वोत्पादकपरमात्मन् ! ( त्ये ) वे ( तव ) तुम्हारेलिये ( दशस्वधाभिः ) पाँचसूक्ष्मभूत और पाँचस्थूलभूतोंका ( स्वधाभिः ) सूक्ष्मशक्तियों द्वारा ( अधिसानौ ) तुम्हारे सर्वोपरि उच्चस्वरूपमें ( अव्ये ) जो सर्वरक्षक है । उसमें ( मृजन्ति ) संशोधन करनेवाले हैं । और ( त्वां ) तुझको ( सप्तयह्वीः नद्यः ) जो

बड़ी सातनाड़ियां हैं उनकेद्वारा प्राप्तहोते हैं ।

भावार्थ—इसमन्त्रमें योगविद्याका वर्णनकिया है और सप्तनद्यः से तात्पर्य सातप्रकारकी नाड़ियोंका है जिनको इड़ापिङ्गलादि नाड़ियोंके सुष्मणानामोंसे कथनकिया है तात्पर्य यह है कि योगीपुरुष उक्तनाड़ियोंके द्वारा संयम करके परमात्मयोगी बने अर्थात् परमात्मा में युक्त हो ।

तन्नु सत्यं पर्वमानस्यास्तु यत्र
विश्वे कारवः सन्नसन्त ।
ज्योतिर्यदह्ने अकृणोदु लोकं
प्रावन्मनुं दस्यवे करभीकम् ॥ ५ ॥

तत् । नु । सत्यं । पर्वमानस्य । अस्तु । यत्र । विश्वे । कारवः । संऽनसंत । ज्योतिः । यत् । अह्ने । अकृणोत् । ऊं इति । लोकं । प्र । आवत् । मनुं । दस्यवे । कः । अभीकं ॥

पदार्थः—( पवमानस्य ) यः सर्वेषां पवित्रयिता परमात्माऽस्ति तस्य ( सत्यम् ) सत्यस्थानं ( नु ) निश्चयम् ( तत् ) तदस्ति ( यत्र ) यस्मिन् ( विश्वे ) सर्वे ( कारवः ), उपासकाः ( संनसन्त ) संगताभवन्ति ( अह्ने ) प्रकाशकाय ( यत् ) यत् ज्योतिरस्ति ( उ ) तथाच ( लोकम्, अकृणोत् ) यज्ज्योतिः प्रकाशमुत्पादयति ( मनुम् ) विज्ञानिपुरुषंच ( प्रावत् ) रक्षति । तस्माज्ज्योतिषः ( दस्यवे ) अज्ञानिनम्, असंस्कारिणम्,

अवैदिकम् वा पुरुषं ( अभीकं ) भयरहितम् ( कः ) कः कर्तुं शक्नोति ।

पदार्थ—( पवमानस्य ) जो सबको पवित्रकरनेवाला परमात्मा है उसका ( सत्यं ) सत्यका स्थान ( नु ) निश्चयकरके ( तत् ) वह है ( यत्र ) जिसमें ( विश्वे ) सब ( कारवः ) उपासक ( सन्नसन्त ) संगत होते हैं। ( अह्न ) प्रकाशकके लिये ( यत् ) जो ज्योति है। ( उ ) और (लोकम-कृणोत् ) जो ज्योतिं ज्ञानरूप प्रकाशको उत्पन्न करती है। और ( मनुं ) विज्ञानी पुरुषकी ( प्रावत् ) रक्षा करती है। उसज्योतिसे (दस्यवे) अज्ञानी, असंस्कारी, वा अवैदिक, पुरुषकेलिये ( अभीकं ) निर्भयता ( कः ) कौन करसकता है।

भावार्थ—इस मंत्रमें परमात्माके सद्रूपका वर्णन किया और उक्त-परमात्माको सब ज्योतियोंका प्रकाशक माना है।

परि सद्मेव पशुमन्ति होता
राजा न सत्यः समितीरियानः ।
सोमः पुनानः कलशाँ अयासी-
त्सीदन्मृगो न महिषो वनेषु ॥ ६ ॥ २ ॥

परि । सद्मऽइव । पशुऽमंति । होता । राजा । न । सत्यः । संऽइतिः । इयानः । सोमः । पुनानः । कलशान् । अयासीत् । सीदन् । मृगः । न । महिषः । वनेषु ।

पदार्थः—( होता ) उक्तपरमात्मोपासकः ( पशुमन्ति,

सद्मेव ) ज्ञानागारमिव तं ( परियाति ) प्राप्नोति ( राजा, न ) यथा राजा (सत्यः) सत्यानुयायी ( समितीः ) सभाः (इयानः) प्राप्नुवन् प्रसीदति तथैव विद्वान् ज्ञानागारं प्राप्य प्रसीदति ( सोमः ) सर्वोत्पादकः परमात्मा ( पुनानः ) सर्वान् पावयन् [ कलशान् ] अन्तःकरणानि [ अयासीत् ] प्राप्नोति ( न ) यथा [ महिषः, मृगः ) महाबली ( वनेषु ) वनेषु प्राप्नोति ।

**पदार्थ**—( होता ) उक्तपरमात्माका उपासक ( पशुमन्तिसद्मेव ) ज्ञानागारके समान ( परियाति ) उसको प्राप्त होता है ( राजान ) जैसेकि राजा ( सत्यः ) सत्यका अनुयायी ( समितीः ) सभाको ( इयानः ) प्राप्त-होता हुआ प्रसन्न होता है इसीप्रकार विद्वान् ज्ञानागारको प्राप्त होकर प्रसन्न होता है । ( सोमः ) सर्वोत्पादकपरमात्मा ( पुनानः ) सबको पवित्र करता हुआ ( कलशां ) अन्तःकरणोंको ( अयासीत् ) प्राप्त होता है । ( न ) जैसेकि ( महिषो मृगः ) वलवाला ( वनेषु ) वनोंमें ) प्राप्त होता है ।

**भावार्थ**—इस मंत्रमें राजधर्मका वर्णन है कि जिसप्रकार राजा-लोग सत्यासत्यकी निर्णयकरनेवाली सभाको प्राप्त होते हैं इसीप्रकार, विद्वानलोगभी न्यायके निर्णय करनेवाली सभावोंको प्राप्त होकर संसारका उद्धार करते हैं—

तात्पर्य यह है कि जिस प्रकार राजालोग अपने न्यायरूपी सत्य से संसारका उद्धार करते हैं इसी प्रकार विद्वानलोग अपने सदूउपदेशों द्वारा संसारका उद्धार करते हैं ।

इति द्विनवतितमं सूक्तं द्वितीयो वर्गश्च समाप्तः ।

अथ त्रिनवतितमस्य पञ्चर्चस्य सूक्तस्य ।

१—५ नोधा ऋषिः ॥ पवमानः सोमो देवता ॥ छन्दः—
१, ३, ४ विराट् त्रिष्टुप् । २ त्रिष्टुप् । ५ पादनिचृत्त्रि-
ष्टुप् ॥ धैवतः स्वरः ॥

साकमुक्षो मर्जयन्त स्वसारो
दश धीरस्य धीतयो धनुत्रीः ।
हरिः पर्यद्रवज्जाः सूर्यस्य द्रोणं
ननक्षे अत्यो न वाजी ॥ १ ॥

साकंऽउक्षः । मर्जयंत । स्वसारः । दश । धीरस्य । धीतयः ।
धनुत्रीः । हरिः । परि । अद्रवत् । जाः । सूर्यस्य । द्रोणं ।
ननक्षे । अत्यः । न । वाजी ॥

पदार्थः—[ अत्योवाजी ] विद्युदादयो महाबलाः पदार्थाः [ न ] यथा [ ननक्षे ] व्याप्नुवन्ति तथैव [ सूर्यस्य, द्रोणं ] सूर्यमण्डलस्य यः प्रभाकलशोऽस्ति तथा [ जाः ] तदीया या दिशः उपदिशश्च सन्ति तासु [ हरिः ] हरणशीलः परमात्मा [ पर्यद्रवत् ] सर्वत्र परिपूरितः तं पूर्णपरमात्मानं [ साकमुक्षः ] युगपत् [ मर्जयन्त ] विषयं कुर्वत्यः ( स्वसारः ] स्वयं सरण-शीलाः ( दश, धीः ) दशधा इन्द्रियवृत्तयः [ धीतयः ] या

ध्यानेन परमात्मानं विषयीकुर्वन्ति तथा [ धनुत्रीः ] मनः प्रेरिकाश्चसन्ति ता एव परमात्मस्वरूपं विषयीकुर्वन्ति ।

पदार्थ—( अत्योवाजी ) बलवाले विद्युदादि पदार्थ ( न ) जैसे ( ननक्षे ) व्याप्त होजाते हैं । इसीप्रकार ( सूर्य्यस्य द्रोणं ) सूर्य्य भण्डलका जो प्रभाकलश है । तथा ( जाः ) उसकी जो दिशा उपदिशायें हैं । उनमें ( हरिः ) हरणशीलपरमात्मा ( पर्य्यद्रवत् ) सर्वत्र परिपूर्ण है । उस पूर्णपरमात्माको ( साकमुक्षः ) एक समयमें ( मर्जयन्त ) विषय करती हुई ( स्वसारः ) स्वयं सरणशील ( दश धीः ) १० प्रकारकी इन्द्रियवृत्तियें ( धीतयः ) जो ध्यानद्वारा परमात्माको विषय करनेवाली हैं । और ( धनुत्रीः ) और मनकी प्रेरक हैं वे परमात्माके स्वरूपको विषय करती हैं ।

भावार्थ—योगी पुरुष जब अपने मनका निरोध करता है तो उसकी इन्द्रियरूप वृत्तियें परमात्माका साक्षात्कार करती हैं ।

सं मातृभिर्न शिशुर्वावशानो
वृषा दधन्वे पुरुवारो अद्भिः ।
मर्यो न योषामभि निष्कृतं
यन्त्सं गच्छते कलश उस्रियाभिः ॥२॥

सं । मातृऽभिः । न । शिशुः । वावशानः । वृषा । दधन्वे । पुरुऽवारः । अत्ऽभिः । मर्यः । न । योषां । अभि । निःऽकृतं । यन् । सं । गच्छते । कलशे । उस्रियाभिः ॥

पदार्थः—[ वृषा ] कर्मयोगी यः [ पुरुवारः ] अनेक-

जनैः वरणीयः सः आद्भिः ] सत्कर्मभिः [ दधन्वे ] धार्यते । यः कर्मयोगी [ वावशानः ] परमात्मविषयककामनावान् तथा [ मातृभिः ] स्वेन्द्रियवृत्तिभिः [शिशुः न] सूक्ष्मकर्तेव (संदधन्वे) धारयति ( न ) यथा [ योषां ] स्त्रियम् [ मर्यः ] मनुष्यः धारयाति तथैव [ उस्रियाभिः ] ज्ञानशक्तिद्वारा कर्मयोगी परमात्मविभूतीर्धारयति । तथा यः परमात्मा ( निष्कृतम् ] ज्ञानविषयो भवन् ( कलशे) तस्य कर्मयोगिनोन्तःकरणे संगच्छते प्राप्नोति ॥

पदार्थ—( वृषा ) कर्म्मयोगी जो ( पुरुवारः ) बहुतलोगों को वरणीय है । वह ( अद्भिः ) सत्कर्म्मों द्वारा ( दधन्वे ) धारण किया जाता है । जो कर्म्मयोगी ( वावशानः ) परमात्माकी कामनावाला है और (मातृभिः) अपनी इन्द्रियवृत्तियोंसे ( शिशुः ) सूक्ष्म करनेवालेके ( न ) समान ( संदधन्वे ) धारण करता है (न) जिस प्रकार ( योषां ) स्त्रीको ( मर्य्यः ) मनुष्य धारण करता है इस प्रकार ( उस्रियाभिः ) ज्ञान की शक्तियोंके द्वारा कर्म्मयोगी परमात्माकी विभूतियोंको धारण करता है । और जो परमात्मा ( निष्कृतं ) ज्ञानका विषय हुआ हुआ ( कलशे ) उस कर्म्मयोगीके अन्तःकरण में ( संगच्छते ) प्राप्त होता है ।

भावार्थ—जिस प्रकार ऐश्वर्यप्रद प्रकृतिरूपी विभूतिको उद्योगी पुरुष धारण करता है इसी प्रकार प्रकृतिकी नानाशक्तिरूपविभूतिको कर्मयोगी पुरुष धारण करता है ।

उत प्र पिप्य ऊधरघ्न्याया

इन्दुर्धाराभिः सचते सुमेधाः ।

मूर्धानं गावः पयसा चमूष्वभि

श्रीणन्ति वसुभिर्न निक्तैः ॥ ३ ॥

उत । प्र । पिप्ये । ऊधः । अघ्न्यायाः इन्दुः । धाराभिः । सचते । सुऽमेधाः । मूर्धानं । गावः । पयसा । चमूषु । अभि । श्रीणंति । वसुऽभिः । न । निक्तैः ॥

पदार्थः—[ सुमेधाः ] सर्वोपरि विज्ञानवान् ( इन्दुः ) प्रकाशस्वरूपपरमात्मा ( धाराभिः ) स्वानन्तशक्तीनामैश्वर्येण ( सचते ) सर्वत्र संगच्छते ( उत ) तथा (अघ्न्यायाः, ऊधः) गवां दुग्धाधारं स्तनमण्डलं ( प्रपिप्ये ) नितान्तं वर्धयति तथा ( गावश्चमूषु ) गवां संघेषु ( पयसा ) दुग्धेन (अभिश्रीणान्ति) परिपूरणं करोति, तथा ( निक्तैर्वसुभिर्न ) शुभ्रधनानीव ( मूर्धा-नम् ) तस्य परमात्मनः मुख्यस्थानीयैश्वर्यं वयं प्राप्नवाम ॥

पदार्थ—( सुमेधाः ) सर्वोपरि विज्ञानवाला ( इन्दुः ) प्रकाश-स्वरूपपरमात्मा ( धाराभिः ) अपनी अनन्तशक्तियोंके ऐश्वर्यसे ( सचते ) सर्वत्र संगत होता है । ( उत ) और ( अघ्न्याया ऊधः ) गौवोंके दुग्धा-धार स्तनमण्डलको ( प्रपिप्ये ) अत्यन्त वृद्धियुक्त करता है । और ( गावश्चमूषु ) गौवोंकी सेनामें ( पयसा ) दुग्धसे ( अभिश्रीणन्ति ) संयुक्त करता है । और ( निक्तैर्वसुभिर्न ) शुभ्रधनोंके समान ( मूर्धानं ) उस परमात्माके मुख्य स्थानीय ऐश्वर्य्यको हमलोग प्राप्त हों ।

भावार्थ—इस मन्त्रमें इस बातकी प्रार्थना है किपरमात्मा गौ, अश्वादि उत्तम धनोंका हमको प्रदान करे ।

स नो देवेभिः पवमान

रदेन्दो रयिमश्विनं वावशानः ।

रथिरायतामुशती पुरन्धिरस्मद्र्यगा
दानवे वसूनाम् ॥ ४ ॥

सः । नः । देवेभिः । पवमान । रद । इंदो इति । रयिं अश्विनं । वावशानः । रथिरायतां । उशती । पुरंऽधिः । अस्मद्र्यक् । आ दानवे वसूनां ॥

पदार्थः—(इंदो) हे प्रकाशस्वरूपपरमात्मन् ! (अश्विनं) कर्मयोगिने ज्ञानयोगिने च ( रयिम् ) धनं ( वावशानः ) धारयन् भवान् ( रद ) तेभ्यः संप्रददातु ( पवमान ) हे सर्वपावक ! ( देवेभिः ) दिव्यशक्तिद्वारा (न) अस्मभ्यम् ( वसूनाम् ) धनाना ( रथिरायताम्, उशती ) अत्यन्त बलयुक्तशक्तीः ( पुरन्धिः ) या उत्त्कृष्टपदार्थधारिकाः ताः ( अस्मद्र्यक् ) मदधीनाः कुरु ॥

पदार्थ—( इन्दो ) हे प्रकाशस्वरूपपरमात्मन् ! ( रयिं ) धन (अश्विनं) कर्मयोगियों और ज्ञानयोगियोंके लिये ( वावशानः ) धारण किये हुए आप ( रद ) प्रदान करो ( पवमान ) हे सबको पवित्र करनेवाले परमात्मन् ! ( देवेभिः ) दिव्यशक्तियोंके द्वारा ( नः ) हमको ( वसूनां )धनोंकी ( रथिरायतामुशती ) अत्यन्त बलवती शक्ति ( पुरन्धिः ) जो बड़े बड़े पदार्थोंके धारण करनेवाली है वह ( अस्मद्र्यक् ) हमारे लिये आप दें ।

भावार्थ—जिन पुरुषोंपर परमात्मा अत्यन्त प्रसन्न होता है उनको धनादि ऐश्वर्यकी हेतु सर्व शक्तियों से परिपूर्ण करता है ।

नूनो रयिमुप मास्व नृवन्तं
पुनानो वाताप्यं विश्वश्चन्द्रम्।
प्र वन्दितुरिन्दो तार्यायुः प्रातर्मक्षु
धियावसुर्जगम्यात्॥ ५॥ ३॥

नु। नः। रयिं। उप। मास्व। नृऽवंतं। पुनानः। वाताप्यं। विश्वऽचंन्द्रं। प्र। वंदितुः। इंदो इति। तारि। आयुः। प्रातः। मक्षु। धियाऽवसुः। जगम्यात्॥

पदार्थः—(इन्दो) हे प्रकाशस्वरूप परमात्मन्! (नु) निश्चयं (नः) अस्मभ्यम् (रयिं) ऐश्वर्यं (उपमास्व) देहि तथा (नृवन्तम्) लोकसंग्रहवन्तं मां (पुनानः) पावयन् (वाताप्यम्) प्रेमरूपम् (विश्वचन्द्रम्) विश्वप्रसादकमैश्वर्यं मह्यं देहि, तथा (वन्दितुः) अस्योपासकस्य भवद्वारा (प्रतारि) वृद्धिर्भवतु (आयुः) आयुश्चभवतु (धियावसुः) अखिलज्ञाननिधिर्भवान् (प्रातः) उपासनाकाले (मक्षु) शीघ्रं (जगम्यात्) आगत्य मद्बुद्धौ रूढो भवतु॥

पदार्थ—(इन्दो) हे प्रकाशस्वरूप परमात्मन! (नु) निश्चय करके (नः) हमारे लिये (रयिं) एश्वर्यं (उपमास्व) आप दें और (नृवन्तं) लोकसंग्रह वाले मुझको (पुनानः) पवित्र करते हुए आप (वाताप्यं) प्रेमरूप (विश्वचन्द्रं) जो विश्वको प्रसन्न करनेवाला ऐश्वर्य्य है। वह मुझे दें। और (वन्दितुः) इस उपासककी आपके द्वारा (प्रतारि) वृद्धि हो।

और ( आयुः ) आयु हो ) ( धियावसु ) सम्पूर्ण ज्ञानों के निधि जो आप हैं ( प्रातः ) उपासनाकालमें ( मक्षु ) शीघ्र ( जगम्यात् ) आकर हमारी बुद्धिमें आरूढ़ हों ।

भावार्थ—इस मंत्रमें प्रकाशस्वरूपपरमात्मासे ऐश्वर्य्यकी प्रार्थना की गई है

इति त्रिनवतितमं सूक्तं तृतीयो वर्ग्गश्च समाप्तः ।

अथ पञ्चर्चस्य चतुर्नवतितमस्य सूक्तस्य

॥ ९४ ॥ १—५ कण्व ऋषिः ॥ पवमानः सोमो देवता ॥

छन्दः—१ निचृत्त्रिष्टुप् । २, ३, ५ विराट्त्रिष्टुप् ।

४ त्रिष्टुप् ॥ धैवतः स्वरः ॥

अथ परमात्मनः श्रेयोधामत्वं निरूप्यते ।

अब परमात्माको सर्वैश्वर्य्यका धाम निरूपण करते हैं ।

अधि यदस्मिन्वाजिनीव शुभः

स्पर्धन्ते धियः सूर्ये न विशः ।

अपो वृणानः पवते कवीयन्व्रजं

न पशुवर्धनाय मन्म ॥ १ ॥

अधि । यत् । अस्मिन् । वाजिनिऽइव । शुभः । स्पर्धन्ते । धियः । सूर्ये । न । विशः । अपः । वृणानः । पवते । कविऽ-

यत् । व्रजं । न । पशुऽवर्धनाय । मन्म ॥

पदार्थः—( सूर्ये ) सूर्यविषये ( न ) यथा ( विशः ) रश्मयः प्रकाशयन्ति तथैव ( धियः ) मनुष्यबुद्धयः ( स्पर्धन्ते ) स्वोत्कटशक्त्या विषयं कुर्वन्ति ( अस्मिन्, अधि ) यास्मिन् परमात्मनि ( वाजिनीव ) सर्वोपरिबलानीव ( शुभः ) शुभबलमस्ति स परमात्मा ( अपोवृणानः ) कर्माध्यक्षोभवन् ( पवते ) सर्वान्पावयति ( कवीयन् ) कविरिवाचरन् ( पशुवर्धनाय ) सर्वद्रष्टृत्वपदाय ( व्रजं, न ) इन्द्रियाधिकरणमन इव ( मन्म ) यः अधिकरणरूपोऽस्ति स एव श्रेयोधामास्ति ॥

पदार्थ—( सूर्य्ये ) सूर्य्यके विषयमें ( न ) जैसे ( विशः ) राश्मियें प्रकाशित करती हैं । उसी प्रकार ( धियः ) मनुष्योंकी बुद्धियें ( स्पर्धन्ते ) अपनी २ उत्कट शक्तिसे विषय करती हैं । ( अस्मिन् अधि ) जिस परमात्मामें ( वाजनीव ) सर्वोपरि बलोंके समान ( शुभः ) शुभ बल है । वह परमात्मा ( अपोवृणानः ) कर्म्मोंका अध्यक्ष होता हुआ ( पवते ) सबको पवित्र करता है । ( कवीयन् ) कवियोंकी तरह आचरण करता हुआ ( पशुवर्धनाय ) सर्वद्रष्टृत्वपदके लिये ( व्रजं, न ) इन्द्रियोंके अधिकरण मनके समान 'व्रजन्ति इन्द्रियाणि यस्मिन् तद्व्रजम्' ( मन्म ) जो अधिकरणरूप है । वही श्रेयका धाम है ।

भावार्थ—परमात्मा सर्वत्र पारिपूर्ण है जो लोग उसके साक्षात् करनेके लिये, अपनी चित्तवृतियोंका निरोध करते हैं परमात्मा उनके ज्ञानका विषय अवश्यमेव होता है ।

द्विता व्यूर्ण्वन्नमृतस्य धाम

स्वर्विदे भुवनानि प्रथन्त ।

धियः पिन्वानाः स्वसरे न गावं
ऋतायन्तीरभि वावश्र इन्दुम् ॥ २ ॥

द्विता । विऽऊर्ण्वन् । अमृतस्य । धाम । स्वःऽविदे । भुवनानि । प्रथन्त । धियः । पिन्वानाः । स्वसरे । न । गावः । ऋतऽयन्तीः । अभि । वावश्रे । इन्दुं ॥

पदार्थः—स परमात्मा ( द्विता ) जीवप्रकृतिरूपद्वैतम् ( व्यूर्ण्वन् ) आच्छादयन् ( अमृतस्य, धाम ) अमृताधारोऽस्ति तस्मै ( स्वर्विदे ) सर्वज्ञाय ( भुवनानि ) सम्पूर्णलोकलोकारान्तराणि ( प्रथन्त ) विस्तीर्यन्ते । सपरमात्मा ( धियः, पिन्वानाः ) विज्ञानेन परिपूर्णः ( स्वसरे ) स्वरूपे ( न ) यथा ( गावः ) इन्द्रियाणि ( ऋतयन्तीः ) यज्ञेच्छां कुर्वाणानि सर्वतः ( अभिवावश्रे ) शब्दं कुर्वन्ति अथवा ( इन्दुम् ) प्रकाशस्वरूपपरमात्मानम् कामयन्ते । एवंहि जिज्ञासवः उक्तपरमात्मानं कामयन्ताम् ॥

पदार्थ— वह परमात्मा ( द्विता ) जीव और प्रकृतिरूपद्वैतको ( व्यूर्ण्वन् ) आच्छादन करताहुआ ( अमृतस्य धाम ) अमृतके धाम है । उस ( स्वर्विदे ) सर्वज्ञके लिये ( भुवनानि ) सम्पूर्णलोकलोकरान्तर ( प्रथन्त ) विस्तीर्ण होते हैं । वह परमात्मा ( धियः पिन्वानाः ) विज्ञानोंसे भराहुआ ( स्वसरे ) अपने स्वरूपमें ( न ) जैसे कि ( गावः ) इन्द्रियें ( ऋतयन्तीः ) यज्ञ की इच्छा करतीहुई सब ओरसे ( अभिवावश्रे ) शब्द करती है । अथवा ( इन्दुं ) प्रकाशरूपपरमात्माकी कामना करती हैं । इसी प्रकार जिज्ञासुलोग उस परमात्माकी कामना करें ।

भावार्थ— इस मंत्रमें परमात्माके द्वैतवादका वर्णन किया है ।

परि यत्कविः काव्या भरते शूरो
न रथो भुवनानि विश्वा ।
देवेषु यशो मर्ताय भूषन्दक्षाय
रायः पुरुभूषु नव्यः ॥ ३ ॥

परि । यत् । कविः । काव्या । भरते । शूरः । न । रथः । भुवनानि । विश्वा । देवेषु । यशः । मर्ताय । भूषन् । दक्षाय । रायः । पुरुऽभूषु । नव्यः ॥

पदार्थः—(यत्) यः परमात्मा (कविः) सर्वज्ञः (काव्या, भरते) कविभावस्य पूरकः, यत्र (शूरो न) शूरस्येव (रथः) क्रियाशक्तिः (विश्वा, भुवनानि) सर्वे लोका यत्र स्थिराः (देवेषु) सर्वविद्वत्सु (यशः) यस्य कीर्त्तिः (मर्ताय, भूषन्) सर्वजनान् भूषयन् (दक्षाय, रायः) यश्चातुर्यस्य धनस्य च (पुरु, भूषु) स्वाम्यस्ति (नव्यः) नित्यनूतनश्च ।

पदार्थ—(यत्) जो परमात्मा (कविः) सर्वज्ञ है (काव्या भरते) कवियोंके भावको पूर्ण करनेवाला है । जिसमें (शूरो न) शूरवीरके समान (रथः) क्रियाशक्ति हैं (विश्वाभुवनानि) सम्पूर्ण भुवन जिसमें स्थिर हैं । (देवेषु) सब विद्वानोंमें (यशः) जिसका यश है । (मर्ताय भूषन्) सब मनुष्योंको विभूषित करता हुआ (दक्षायरायः) जो चातुर्य्यका और धनका (पुरुभूषु) स्वामी है । और (नव्यः) नित्यनूतन है ।

**भावार्थ**—परमात्मा सर्वज्ञ है और अपनी सर्वज्ञतासे सबके ज्ञानमें प्रवेश करता है ।

श्रिये जातः श्रिय आ निरियाय
श्रियं वयो जरितृभ्यो दधाति ।
श्रियं वसाना अमृतत्वमायन्भवन्ति
सत्या समिथा मितद्रौ ॥ ४ ॥

श्रिये । जातः । श्रिये । आ । निः । इयाय । श्रियं । वयः । जरितृऽभ्यः । दधाति । श्रियं । वसानाः । अमृतऽत्वं । आयन् । भवंति । सत्या । संऽइथा । मितऽद्रौ ॥

**पदार्थः**—स परमात्मा ( श्रिये, जातः ) ऐश्वर्याय सर्वत्र प्रकाश्यते ( श्रियं, निरियाय ) श्रिये हि सर्वत्र गतिशीलोऽस्ति ( श्रियम् ) ऐश्वर्यं तथा ( वयः ) आयुश्च ( जारितृभ्यः ) उपासकेभ्यः ( दधाति ) धारयति ( श्रियं, वसानाः ) श्रियं धारयन् ( अमृतत्वम्, आयन् ) अमृतत्वं विस्तारयन् ( सत्या,-समिथा ) सत्यरूप यज्ञानां कर्ता भवति ( मितद्रौ ) सर्वत्र गतिशीले परमात्मनि ( सत्या, भवन्ति ) ब्रह्मयज्ञाः चित्तस्थैर्य हेतवो भवन्ति ॥

**पदार्थ**—वह परमात्मा ( श्रियेजातः ) ऐश्वर्य्यके लिये सर्वत्र प्रगट है । और ( श्रियंनिरियाय ) श्रीके लिये ही सर्वत्र गतिशील है ।

और ( श्रियं ) ऐश्वर्य्यको और ( वयः ) आयुको ( जरितृभ्यः ) उपासकोंके लिये ( दधाति ) धारण करता है । ( श्रियं वसानाः ) श्रीको धारण करता हुआ ( अमृतत्वमायन् ) अमृतत्वको विस्तार करता हुआ ( सत्या समिथा ) सत्यरूपी यज्ञोंके करनेवाला होता है । ( मितद्रौ ) सर्वत्र गतिशील परमात्मामें ( सत्या भवन्ति ) ब्रह्मयज्ञ चित्तकी स्थिरताके हेतु होते हैं ।

भावार्थ—जो परमात्मोपासक हैं उनको परमात्मा सब प्रकारका ऐश्वर्य देता है ।

इषमूर्जमभ्यर्षाश्वं गामुरुज्योतिः
कृणुहि मत्सि देवान् । विश्वानि
हि सुषहा तानि तुभ्यं पवमान
बाधसे सोम शत्रून् ॥ ५ ॥ ४ ॥

इषं ऊर्जं । अभि । अर्ष । अश्वं । गां । उरु । ज्योतिः । कृणुहि । मत्सि । देवान् । विश्वानि । हि । सुऽसहा । तानि । तुभ्यं । पवमान । बाधसे । सोम । शत्रून् ॥

पदार्थः—( इषम् ) ऐश्वर्य ( ऊर्जम् ) बलंच ( अभ्यर्ष ) भवान्ददातु ( अश्वम् ) क्रियाशक्तिम् ( गाम् ) ज्ञानशक्तिंच इमे द्वे अपि ( उरुज्योतिः ) विस्तृतज्योतिषौ ( कृणुहि ) करोतु ( देवान् ) विदुषः ( मत्सि ) तर्पयतु ( विश्वानि, हि, सुषहा ) सर्वसहनशीलशक्तयो भवत्सु विद्यन्ते ( तानि ) ताः शक्तयः त्वा भूषयन्ति ( पवमान ) हे सर्वपावक ! ( तुभ्यम् ) त्वत्तः

इदं प्रार्थये यत्त्वं ( शत्रून् ) अन्यायकारिणां [ बाधसे ] निवृत्तौ समर्थः [ सोम ] हे परमात्मन् ! भवान् अस्मास्वपि एवंविधं-बलं ददातु ॥

पदार्थ—( इषम् ) ऐश्वर्य्य और ( उर्जम ) बल ( अभ्यर्ष ) हे परमात्मन् आप दें। और ( अश्वम् ) क्रियाशक्ति और ( गाम् ) ज्ञानरूपी शक्ति इन दोनों को आप ( उरुज्योतिः ) विस्तृतज्योति ( कृणुहि ) करें और ( देवान् ) विद्वान् लोगोंको ( मत्सि ) तृप्त करें। ( विश्वानि हि सुषहा ) सम्पूर्ण सहनशीलशक्तियें निश्चय करके आपमें हैं। ( तानि ) वे शक्तियें तुमको विभूषित करती हैं। ( पवमान ) हे सबको पवित्र करनेवाले परमात्मन् ! ( तुभ्यम् ) तुमसे मैं यह प्रार्थना करता हूं कि तुम ( शत्रून् ) अन्यायकारीदुष्टोंको ( बाधसे ) निवृत्त करनेके लिये समर्थ हो। ( सोम ) हे परमात्मन् । आप हममें भी इसप्रकारका बल दीजिये।

भावार्थ—परमात्मा अनन्तशक्तिरूप है जब वह अपने भक्तोंको पात्र समझता है तो सब प्रकारके अन्यायकारियोंको दमन करके सुनीति और धर्मका प्रचार संसारमें फैलादेता है। तात्पर्य यह है कि जो लोग परमात्माकी दयाका पात्र बनते हैं उन्हींके शत्रुभूत दुष्टदस्युवोंका परमात्मा दमनकरता है अन्यों के नहीं।

इति चतुर्नवतितमंसूक्तं चतुर्थोवर्गश्च समाप्तः।

अथ पञ्चर्चस्य पञ्चनवतितमस्य सूक्तस्य—

॥ ९५ ॥ १—५ प्रस्कण्व ऋषिः ॥ पवमानः सोमो देवता ॥ छन्दः—१ त्रिष्टुप् । २ संस्तारपंक्तिः । ३ विराट्त्रिष्टुप् । ४ निचृत्त्रिष्टुप् । ५ पादनिचृत्त्रिष्टुप् । स्वरः—१, ३—५ धैवतः । २ पंचमः ॥

कनिक्रन्ति हरिरासृज्यमानः
सीदन्वनस्य जठरे पुनानः ।
नृभिर्यतः कृणुते निर्णिजं गा
अतो मतीर्जनयत स्वधाभिः ॥ १ ॥

कनिक्रंति । हरिः । आ । सृज्यमानः । सीदन् । वनस्य । जठरे । पुनानः । नृऽभिः । यतः । कृणुते । निःऽनिजं । गाः । अतः । मतीः । जनयत । स्वधाभिः ॥

पदार्थः—( हरिः ) हरणशीलशक्तिमान् परमात्मा ( सृज्यमानः ) साक्षात्कारं प्राप्नोति तदा ( वनस्य ) भक्तस्य ( जठरे ) अन्तःकरणे [ सीदन् ] स्थितिं कुर्वन् ( पुनानः ) तं पावयंश्च विराजते (यतः) यस्मात् [नृभिः] मनुष्यैः [ निर्णिजं कृणुते ] साक्षात्क्रियते तदा [ गाः ] इन्द्रियाणिशोधयन् [ मतीः जनयत ] सुमतिमुत्पादयति [ स्वधाभिः ] स्वशक्तिभिः [कनिक्रन्ति] पुनः पुनः शब्दायमान इव साक्षात्कारं लभते ।

पदार्थ—( हरिः ) हरणशील शक्तियोंवाला परमात्मा ( सृज्यमानः ) साक्षात्कारको प्राप्त होता है । तव ( वनस्य ) भक्तके ( जठरे ) अन्तःकरण-में ( सीदन् ) ठहरताहुआ और ( पुनानः ) उसको पवित्र करताहुआ विराजमान होता है । ( यतः ) जिसलिये ( नृभिः ) मनुष्यों द्वारा ( निर्णिजं कृणुते ) साक्षात्कार कियाजाता है । तब ( गाः ) इन्द्रियोंको शुद्ध करके ( मतिर्जनयत ) अच्छेप्रकारकी बुद्धि उत्पन्न करता है ( स्वधाभिः ) स्वशक्तियोंके द्वारा और ( कनिक्रन्ति ) पुनः शब्दायमानके समान साक्षात्कारको प्राप्त होता है ।

भावार्थ—वास्तवमें परमात्मा सर्वव्यापक है उसके लिये विराज-मान होना और न विराजमान होना कथन नहीं किया जासकता, विराज-मान होना यहाँ साक्षात्कारके अभिप्रायसे कथन कियागया है ।

हरिः सृजानः पथ्यामृतस्ये-
यर्ति वाचमरितेव नावम् ।
देवो देवानां गुह्यानि नामावि-
ष्कृणोति बर्हिषि प्रवाचे ॥ २ ॥

हरिः । सृजानः । पथ्याम् । ऋतस्य । इयर्ति । वाचम् । अरिताऽइव । नावम् । देवः । देवानाम् । गुह्यानि । नाम । आविः । कृणोति । बर्हिषि । प्रऽवाचे ॥

पदार्थः—( हरिः ) स पूर्वोक्तः परमात्मा ( सृजानः ) साक्षात्क्रियमाणः (ऋतस्य, पथ्याम्) वाग्द्वारा मुक्तिमार्गं ( इयर्त्ति ) प्रेरयति ( अरिता, इव, नावम् ) यथा नावस्तरणकाले नाविकः

प्रेरणां करोति स परमात्मा ( देवानां देवः ) सर्वदेवानामधिष्ठाता ( गुह्यानि ) गुप्ताः ( नाम, आविष्कृणोति ) संज्ञाः प्रकटयति (बर्हिषि, प्रवाचे) वाग्यज्ञार्थम् ।

पदार्थ—( हरिः ) वह पूर्वोक्त परमात्मा ( सृजानः ) साक्षात्कारको प्राप्त हुआ ( ऋतस्य, पथ्यां ) वाक्द्वारा मुक्तिमार्गकी ( इयर्ति ) प्रेरणा करता है । ( अरितेवनावम्) जैसा कि नौकाके पार लगानेके समयमें नाविक प्रेरणा करता है । और (देवानां देवः) सब देवोंका देव ( गुह्यानि ) गुप्त ( नामाविष्कृणोति ) संज्ञायोंको प्रगट करता है ( बर्हिषि प्रवाचे ) वाणीरूपी यज्ञके लिये ।

भावार्थ—परमात्माने ब्रह्मयज्ञके लिये बहुतसी संज्ञाओंको निर्माण किया, अर्थात्—शब्दब्रह्म जो वेद है उसका निर्माण अर्थात्—आविर्भाव संज्ञा संज्ञिभाव पर निर्भर करता है । इसीलिये संज्ञासंज्ञिभावको रहस्यरूपसे कथन कियागया है ।

अपामिवेदूर्मयस्तर्तुराणाः
प्र मनीषा ईरते सोममच्छं ।
नमस्यन्तीरुपं च यन्ति सं चा
चं विशन्त्युशतीरुशन्तम् ॥ ३ ॥

अपांऽइव । इत् । ऊर्मयः । तर्तुराणाः । प्र । मनीषाः । ईरते । सोमं । अच्छं । नमस्यन्तीः । उपं । च । यंति । सं । च । आ । च । विशंति । उशतीः । उशतं ॥

पदार्थः—( उशतीः ) शोभमानस्तुतयः ( उशन्तम् )

शोभमानं ( संविशन्ति ) प्राप्नुवंति यथा ( तर्तुराणाः ) शीघ्रकारिणां ( मनीषा ) बुद्धयः ( प्रेरते ) प्रेरयन्ति एवंहि (सोमम्) परमात्मानम् ( अच्छ ) सम्यक् प्राप्नुवन्ति (च) तथा (अपाम्, इव, ऊर्मयः ) यथा जलवीचयः जलं भूषयन्ति एवं हि परमात्म विभूतयः परमात्मानं मण्डयन्ति ( च ) तथा ( नमस्यन्ति ) ताः परमात्मविभूतयः सत्कुर्वन्ति ( च ) तथा ( उपयन्ति ) तं लभन्ते ।

**पदार्थ**—( उशतीः ) शोभावाली स्तुतियें ( उशन्तम् ) शोभावालेको ( संविशन्ति ) प्राप्त होती हैं जैसे कि ( तर्तुराणाः ) शीघ्र करनेवाले लोगोंकी ( मनीषा ) बुद्धियें ( प्रेरते ) प्रेरणा करती हैं। इसी प्रकार ( सोमम् ) परमात्माको ( अच्छ ) भलीभांति प्राप्त होती हैं। ( च ) और ( अपामिवोर्मयः ) जैसे कि जलोंकी लहरें जलोंको सुशोभित करती हैं। इसी प्रकार परमात्माकी विभूतियें परमात्माको सुशोभित करती हैं। ( च ) और ( नमस्यन्ति ) परमात्माकी विभूतियें सत्कार करती हैं। और (उपयन्ति ) उसको प्राप्त होती हैं।

**भावार्थ**—इसमें परमात्माकी विभूतिओंका वर्णन है कि परमात्माकी विभूतियें परमात्माके भावोंको प्रतिक्षण द्योतन करती हैं जिनसे परमात्मापरायण पुरुष परमात्माका साक्षात्कार करते हैं।

तं मर्मृजानं महिषं न
सानांवंशुं दुहन्त्युक्षणं गिरिष्ठाम् ।
तं वावशानं मतयः सचन्ते
त्रितो बिभर्ति वरुणं समुद्रे ॥ ४ ॥

तं । मर्मृजानम् । महिषं । न । सानौ । अंशुं । दुहन्ति । उक्षणं । गिरिऽस्थां । तं । वावशानं । मतयः । सचन्ते । त्रितः । बिभर्ति । वरुणं । समुद्रे ।

पदार्थः—( तं, मर्मृजानम् ) तं भक्तैरुपास्यमानं परमात्मानं ( सानौ ) सर्वोपरि शिखरे ( महिषं, न ) महापुरुषमिव विराजमानं ( अंशुम ) सूक्ष्मादपि सूक्ष्मम् ( उक्षणम् ) सर्वाधिकबलदम् ( गिरिष्ठाम् ) वेदवागधिष्ठातारं ( तं, वावशानम् ) सर्वोपरि कमनीयम् ( मतयः, सचन्ते ) सुमतयः सेवन्ते यश्च ( समुद्रे ) अन्तरिक्षे ( वरुणम् ) वरणीयपदार्थान् ( बिभर्ति ) पोषयति ( त्रितः ) जीवप्रकृतिमहत्तत्वरूपसूक्ष्मजगत्कारणानामाधिष्ठाताऽस्ति अथवा ( त्रितः ) कालत्रयाधिष्ठातास्ति ॥

पदार्थ—( तं मर्मृजानम् ) उस भक्तों द्वारा उपासित परमात्माको ( सानौ ) सर्वोपरि शिखरपर ( महिषंन ) महापुरुषके समान विराजमानको ( अंशुम् ) जो सूक्ष्मसे सूक्ष्म है। ( उक्षणम् ) जो सर्वोपरि बलप्रद है। ( गिरिष्ठाम् ) जो वेदरूपी वाणीका अधिष्ठाता है। ( तं वावशानम् ) उस सर्वोपरि कमनीय परमात्माको ( मतयः ) सुमतिलोग ( सचन्ते ) संगत होते हैं। और जो परमात्मा ( समुद्रे ) अन्तरिक्षमें ( वरुणम् ) वरणीयपदार्थोंको ( बिभर्ति ) धारण करता है। और ( त्रितः ) प्रकृति, जीव, और महत्तत्व रूप सूक्ष्म जगत्कारणोंका अधिष्ठाता है । अथवा ( त्रितः ) भूत, भविष्यत, वर्त्तमान तीनों कालोंका अधिष्ठाता है।

भावार्थ—इस मन्त्रमें परमात्माके स्वरूपका वर्णन है कि वह अत्यन्त सूक्ष्म और दुर्विज्ञेय है उसको संयमी पुरुष साक्षात्कार कर सकते हैं।

इष्यन्वाचमुपवक्तेव होतुः
पुनान इन्दो वि ष्या मनीषाम् ।
इन्द्रश्च यत्क्षयथः सौभगाय
सुवीर्यस्य पतयः स्याम ॥ ५ ॥ ५ ॥

इष्यन् । वाचं । उपवक्ताऽइव । होतुः । पुनानः । इंदो इति । वि । स्य । मनीषां । इंद्रः । च । यत् । क्षयथः । सौभगाय । सुऽवीर्यस्य । पतयः । स्याम ॥

पदार्थः—( इन्दो ) हे प्रकाशस्वरूपपरमात्मन् ! भवान् ( मनीषां ) अस्मभ्यं बुद्धिं ( विष्य ) प्रयच्छतु तथा ( वाचमिच्छन् ) वाणीं कामयमानः (उपवक्ता, इव) वक्ताइव तथा (होतुः) उपासकं सदैवोपदिशतु ( च ) तथा ( यत् ) यद्धि ( इन्द्रः ) कर्मयोगी भवांश्च ( क्षयथः ) उभावपि अद्वैतभावं प्राप्तौ ( सौभगाय ) अस्मै सौभाग्याय धन्यं मन्ये भवन्तम् प्रार्थयेच ( सुवीर्यस्य ) सर्वोपरि बलस्य ( पतयः, स्याम ) पतयो भवेम ॥

पदार्थ—( इन्दो ) हे प्रकाशस्वरूपपरमात्मन् ! आप ( मनीषाम् ) बुद्धिको हमारे लिये ( विष्य ) प्रदान कीजिये । और ( वाचमिष्यन् ) वाणी-की इच्छा करतेहुए ( उपवक्तेव ) वक्ताके समान ( होतुः ) उपासकको सदुपदेश करें । ( च ) और ( यत् ) जो ( इन्द्रः ) कर्म्मयोगी और आप ( क्षयथः ) दोनों अद्वैतभावको प्राप्त हैं । ( सौभगाय ) इस सौभाग्य के लिये हम आपका धन्यवाद करते हैं । और आपसे प्रार्थना करते हैं कि ( सुवीर्य्यस्य पतयः स्याम ) सर्वोपरि बलके पति हों ।

भावार्थ—इस मन्त्रमें उक्तपरमात्मासे बलकी प्रार्थना कीगयी है।

इति पञ्चनवतितमं सूक्तं पञ्चमोवर्ग्गश्च समाप्तः ।

---

अथ चतुर्विंशत्यृचस्य षण्णवतितमस्य सूक्तस्य—

१—२४ प्रतर्दनो दैवोदासिर्ऋषिः ॥ पवमानः सोमो देवता ॥ छन्दः—१, ३, ११, १२ १४, १९ २३, त्रिष्टुप् । २, १७ विराट त्रिष्टुप्। ४–१०, १३, १५, १८, २१, २४ निचृत्त्रिष्टुप् । १६ आर्चीं भुरिक्त्रिष्टुप् २०, २२ पादनिचृत्त्रिष्टुप् ॥ धैवतः स्वरः ॥

प्र सेनानीः शूरो अग्रे रथानां
गव्यन्नेति हर्षते अस्य सेना ।
भद्रान्कृण्वन्निन्द्रहवान्त्सखिभ्य आ
सोमो वस्त्रा रभसानि दत्ते ॥ १ ॥

प्र । सेनाऽनीः । शूरः । अग्रे । रथानां । गव्यन् । एति । हर्षते । अस्य । सेना । भद्रान् । कृण्वन् । इंद्रऽहवान् । सखिऽभ्यः । आ । सोमः । वस्त्रा । रभसानि । दत्ते ॥

पदार्थः—( सोमः ) सोमरूपः परमात्मा ( रभसानि ) अतिवेगेन ( वस्त्रा ) आच्छादकास्त्राणि ( आदत्ते ) गृह्णाति

( सखिभ्यः ) अनुयायिभ्यः ( इन्द्रहवान् ) कर्मयोगिभ्यः ( भद्राणि, कृण्वन् ) कल्याणान्युत्पादयन् आस्ते यथा ( शूरः ) भटः ( सेनानीः ) सेनानायकः ( रथानाम ) संग्रामानाम् ( अग्रे ) समक्षं ( गव्यन् ) यजमानानामैश्वर्यमिच्छन् ( एति ) प्राप्नोति एवं हि परमात्मा न्यायिनामैश्वर्यमिच्छन् तान्संरक्षति । ( अस्य, सेना )अस्य शूरस्य सेना ( हर्षते ) यथा हृष्टा भवति एवं हि परमात्मानुयायिनामपि सेना हर्षं लभते ॥

पदार्थ—( सोमः ) सोमरूपपरमात्मा ( सखिभ्यः ) अपने अनुयायी ( इन्द्रहवान् ) जो कर्म्मयोगी हैं उनके लिये ( भद्राणि कृण्वन् ) भलाई करताहुआ ( वस्त्रारभसानि ) अत्यन्त वेगवाले शस्त्रोंको ( आदत्ते ) ग्रहण करता है । जैसाकि ( शूरः ) शूरवीर ( सेनानीः ) जो सेनाओंका नेता है । वह ( रथानाम् ) संग्रामोंके ( अग्रे ) समक्ष ( गव्यन् ) यजमानों के ऐश्वर्य्यकी इच्छा करता हुआ ( एति ) प्राप्त होता है । इसप्रकार परमात्मा न्यायकारियोंके ऐश्वर्य्यको चाहता हुआ अपने रूपसे न्यायकारियोंकी रक्षा करता है । ( अस्य ) उस शूरवीरकी ( सेना ) फौज ( हर्षते ) जैसे प्रसन्न होती है । इसी प्रकार परमात्माके अनुयायियोंकी सेना भी हर्षको प्राप्त होती है ।

भावार्थ—इस मन्त्रमें राजधर्मका वर्णन है कि परमात्मपरायण-पुरुष राजधर्म द्वारा अनन्तप्रकारके ऐश्वर्योंको प्राप्त होते हैं ।

समस्य हरिं हरयो मृजन्त्य-
श्वहयैरनिशितं नमोभिः ।
आ तिष्ठति रथमिन्द्रस्य सखा
विद्वाँ एना सुमतिं यात्यच्छ ॥ २ ॥

सं । अस्य । हरिं । हरयः । मृजंति । अश्वऽहयैः । अनिंऽशितं । नमःऽभिः । आ । तिष्ठति । रथं । इंद्रस्य । सखा । विद्वान् । एन । सुऽमतिं । याति । अच्छ ॥

पदार्थः—(अस्य, हरिम्) अस्य परमात्मनो हरणशीलशक्तीः (हरयः) ज्ञानकिरणाः (मृजन्ति) प्रदीपयन्ति तथा (अश्वहयैः) विद्युदादिशक्तयइव (अनिशितम्) असंस्कृतमपि (नमोभिः) सत्कारद्वारेण संस्कृतं कुर्वन् (आतिष्ठति) आगत्य विराजते (रथम्) उक्तगतिशीलपरमात्मानम् (इन्द्रस्य) कर्मयोगिनः (सखा) मित्रम् (विद्वान्) मेधावी जनः (एन) उक्तमार्गेण (सुमतिम्) सुमार्गम् (अच्छ, याति) सम्यक् प्राप्नोति

पदार्थ—(अस्य हरिम्) उस परमात्माकी हरणशीलशक्तिको (हरयः) ज्ञानकी किरणें (मृजन्ति) प्रदीप्त करती हैं। और (अश्वहयैः) विद्युदादि शक्तियोंके समान (अनिशितम्) असंस्कृतको भी (नमोभिः) सत्कारद्वारा संस्कृत करताहुआ (आतिष्ठति) आकर विराजमान होता है। (रथम्) उक्तगतिस्वरूपपरमात्माको (इन्द्रस्य) कर्मयोगीका (सखा) मित्र (विद्वान्) मेधावीपुरुष (एना) उक्त रास्तेसे (सुमतिम्) सुन्दरमार्गको (अच्छ याति) भलीभांति प्राप्त होता है।

भावार्थ—जो लोग नम्रभावसे परमात्माकी उपासना करते हैं वे असंस्कृत होकर भी शुद्ध होजाते हैं, अर्थात्—उनकी शुद्धिका कारण एकमात्र परमात्मोपासनरूपी संस्कार ही संस्कार है कोईअन्य संस्कार नहीं।

स नो देव देवताते पवस्व
महे सोम प्सरस इन्द्रपानः ।

कृण्वन्नपो वर्षयन्द्यामुतेमामुरोरा
नो वरिवस्या पुनानः ॥ ३ ॥

सः । नः । देव । देवऽताते । पवस्व । महे । सोम । प्सरसे । इंद्रऽपानः । कृण्वन् । अपः । वर्षयन् । द्यां । उत । इमां । उरोः । आ । नः । वरिवस्य । पुनानः ॥

पदार्थः—( देव, सोम ) हे दिव्यगुणयुक्तपरमात्मन् ! ( देवताते ) विद्वद्भिः विस्तृते ( महे ) महति ( प्सरसे ) सुन्दर यज्ञे भवान् ( पवस्व ) पवित्रयतु ( इन्द्रपानः ) भवान् कर्मयोगिनां तृप्तिरूपोऽस्ति ( अपः, कृण्वन् ) शुभकर्माणि कुर्वन् ( उत ) अथवा ( इमां द्याम् ) इमं द्युलोकमुत्पादयन् (उरः) अस्य कर्मयोगस्य विस्तृतमार्गेण ( आ ) आगच्छन् ( नः ) अस्मान् ( वरिवस्य ) धनाद्यैश्वर्यद्वारेण ( पुनानः ) पावयन् एत्य अस्मद्धृदये विराजताम् ।

पदार्थ—( देव सोम ) हे दिव्यगुणयुक्तपरमात्मन् ! ( देवताते ) विद्वानोंसे विस्तृत कियेहुए ( महे ) बड़े ( प्सरसे ) सुन्दरयज्ञमें आप ( पवस्व ) पवित्र करें (इन्द्रपानः) आप कर्म्मयोगियोंके तृप्तिरूप हैं । और ( अपः कृण्वन् ) शुभकर्मोंको करते हुए ( उत ) अथवा ( इमां द्याम् ) इस द्युलोकको उत्पन्न करते हुए आप ( उरः ) इस कर्म्मयोगके विस्तृतमार्गसे ( आ ) आतेहुए ( नः ) हमको ( वरिवस्य ) धनादि ऐश्वर्य्यके द्वारा ( पुनानः ) पवित्र करतेहुए आप आकर हमारे हृदयमें विराजमान हों ।

भावार्थ—इस मन्त्रमें कर्मयोगका वर्णन है कि कर्मयोगी अपने योगजकर्म द्वारा परमात्माका साक्षात्कार करता है ।

अजींतयेऽहंतये पवस्व
स्वस्तयें सर्वतांतये बृहते ।
तदुशन्ति विश्वं इमे सखांयस्तदहं
वंश्मि पवमान सोम ॥ ४ ॥

अजींतये । अहंतये । पवस्व । स्वस्तयें । सर्वऽतांतये । बृहते । तत् । उशंति । विश्वें । इमे । सखांयः । तत् । अहं । वश्मि । पवमान । सोम ॥

पदार्थः—( सोम ) हे सर्वोत्पादक ! ( पवमान ) सर्वपावक ! ( अजीतये) अहं न केनापि पराजितः स्याम् (अहतये) अहतो भवेयम् ( पवस्व ) एतदर्थं मां पवित्रय ( स्वस्तये ) मङ्गलाय ( बृहते, सर्वतातये ) बृहद्यज्ञाय च ( तदुशन्ति ) एतद्विषयिकां कामनां ( इमे, विश्वे ) इमे सर्वे ( सखायः ) मित्राणि कुर्वन्ति ( तत ) तस्मात् ( अहं, वश्मि ) अहमेतत्कामये अतः हे परमात्मन् ! भवान् मह्यमुक्तैश्वर्यं ददातु यतो भवानस्य ब्रह्माण्डस्योत्पादकः ।

पदार्थ—( सोम ) हे सर्वोत्पादक ! ( पवमान ) हे सबको पवित्र करनेवाले परमात्मन् ! (अजीतये) हम किसीसे जीते न जायें। (अहतये) किसीसे मारे न जायें ( पवस्व ) इस बातके लिये आप हमको पवित्र बनायें और

( स्वस्तये ) मङ्गलके लिये ( बृहते सर्वतातये ) सर्वोपरि बृहत् यज्ञके लिये ( तदुशन्ति ) इसी पदकी कामना ( इमे विश्वे ) ये सब ( सखायः ) मित्रगण करते हैं । ( तत् ) इसलिये ( अहम् ) मैं ( वश्मि ) यही कामना करता हूँ । इसलिये हे परमात्मन् ! आप हमको उक्त प्रकारका ऐश्वर्य्य दें । क्योंकि आप इस ब्रह्माण्डके उत्पत्तिकर्ता हैं ।

भावार्थ—जो लोग परमात्माकी आज्ञाओंका पालन करते हैं वे किसीसे दवाये व दीन नहीं किये जा सकते ।

सोमः पवते जनिता मतीनां
जनिता दिवो जनिता पृथिव्याः ।
जनिताग्नेर्जनिता सूर्यस्य जनि-
तेन्द्रस्य जनितोत विष्णोः ॥ ५ ॥ ६ ॥

सोमः । पवते । जनिता । मतीनां । जनिता । दिवः । जनिता । पृथिव्याः । जनिता । अग्नेः । जनिता । सूर्यस्य । जनिता । इंद्रस्य । जनिता । उत । विष्णोः ॥

पदार्थः—( सोमः ) सर्वोत्पादकः परमात्मा ( पवते ) सर्वान्पुनाति ( जनिता, मतीनाम् ) ज्ञानानामुत्पादकः ( दिवो जनिता ) द्युलोकस्योत्पादकः ( पृथिव्या जनिता ) पृथिव्या उत्पादकः ( सूर्यस्य, जनिता ) सूर्यस्योत्पादकः ( अग्नेः, जनिता ) अग्नेरुत्पादकः ( उत ) अथच ( विष्णोः जनिता ) ज्ञानयोग्युत्पादकः ( इन्द्रस्य, जनिता ) कर्मयोग्युत्पादकः ।

पदार्थ—(सोमः) उक्तसर्वोत्पादक परमात्मा (पवते) सबको पवित्र करता है (जनिता मतीनाम्) और ज्ञानोंको उत्पन्न करनेवाला है (दिवो जनिता) द्युलोकको उत्पन्न करनेवाला है। (पृथिव्या जनिता) पृथिवीलोकको उत्पन्न करनेवाला है (अग्नेर्जनिता) अग्निको उत्पन्न करनेवाला है। और (सूर्यस्य जनिता) सूर्य्यको उत्पन्न करनेवाला है। (उत) और (विष्णोः जनिता) ज्ञानयोगीको उत्पन्न करनेवाला है। (इन्द्रस्य जनिता) कर्म्मयोगीको उत्पन्न करनेवाला है।

भावार्थ—इस मन्त्रमें परमात्माके सर्वकर्तृत्वका वर्णन किया है।

ब्रह्मा देवानां पदवी कवीना-
मृषिर्विप्राणां महिषो मृगाणाम्।
श्येनो गृध्राणां स्वधितिर्वनानां
सोमः पवित्रमत्येति रेभन् ॥ ६ ॥

ब्रह्मा । देवानां । पदऽवी । कवीनां । ऋषिः । विप्राणां । महिषः । मृगाणां । श्येनः । गृध्राणां । स्वऽधितिः । वनानां । सोमः । पवित्रं । अति । एति । रेभन् ॥

पदार्थः—(सोमः) सर्वोत्पादकः परमात्मा (पवित्रम्) वज्रिणमपि (रेभन्) शब्दायमानः (अत्येति) अतिक्रामति, यथा (गृध्राणाम्) शस्त्राणां मध्ये (स्वधितिः) वज्रनामशस्त्रं सर्वाण्यतिक्रामति (मृगाणां, श्येनः) यथाच शीघ्रगातिकपक्षिणा मध्ये श्येनः (विप्राणाम्, कवीनाम्, ऋषिः) विप्राणां कवीना मध्ये ऋषि

( देवानां, ब्रह्मा ) विदुषां मध्ये चतुर्णामपि वेदानामध्येता सर्वान-तिक्रामति एवं हि (पदवी) सर्वोच्चपदरूपः सोमः सर्वेषुवस्तुषु मुख्यः ॥

पदार्थ—( सोमः ) सर्वोत्पादकपरमात्मा ( पवित्रम् ) वज्रवालेको भी ( रेभन् ) शब्द करता हुआ अतिक्रमण कर जाता है। जिसप्रकार ( गृध्राणाम् ) "गृध्यति शश्वच्छेत्तुमभिकांक्षति इति गृध्रः शस्त्रम" । शस्त्रोंके मध्यमें (स्वधितिः) वज्र सबको अतिक्रमणकर जाता है और (मृगाणां श्येनः) शीघ्रगतिवाले पक्षियोंमें बाज और ( विप्राणाम्, कवीनां, ऋषिः ) विप्र और कविओंके मध्यमें ऋषि सबको अतिक्रमण कर जाता है। ( देवानाम् ) और विद्वानों के मध्यमें ( ब्रह्मा ) ४ वेदोंका वक्ता सबको अतिक्रमण कर जाता है। इसीप्रकार ( पदवी ) सर्वोपरि उच्चपदरूपपरमात्मा सब वस्तुओं में मुख्य है।

भावार्थः—इस मंत्रमें कवि, विप्र, ब्रह्मादि मुख्य २ शक्तियोंवाले पुरुषोंका दृष्टान्त देकर परमात्माकी मुख्यता वर्णन की है।

प्रावीविपद्वाच ऊर्मिं न सिन्धुर्गिरः
सोमः पवमानो मनीषाः ।
अन्तः पश्यन्वृजनेमावराण्या
तिष्ठति वृषभो गोषु जानन् ॥७॥

प्र। अवीविपत्। वाचः। ऊर्मिं। न। सिंधुः। गिरः। सोमः। पवमानः। मनीषाः। अंतरिति। पश्यन्। वृजना। इमा। अवराणि। आ। तिष्ठति। वृषभः। गोषु। जानन् ॥

**पदार्थः**—स परमात्मा ( वाच ऊर्मिम् ) वाण्या तरङ्गान् ( सिन्धुर्न ) यथा सिन्धुः स्ववीचीः तथा ( अवीविपत् ) कम्पयति ( सोमः ) स एव ( पवमानः ) सर्वपावकः ( मनीषाः ) मनसोऽपिप्रेरकः ( अन्तः, पश्यन् ) सर्वान्तर्यामी भवन् ( वृजना ) अस्मिन्संसाररूपयज्ञे (इमा, अवराणि, आतिष्ठति) इमानि प्रकृति कार्याणि आश्रयते यथा ( वृषभः ) सर्वबलप्रदः जीवात्मा ( जानन् ) चेतनरूपेण आधिष्ठातृत्वं सम्पाद्य ( गोषु ) इन्द्रियेषु विराजते ।

**पदार्थ**—वह परमात्मा ( वाच ऊर्मिम् ) वाणीकी लहरों को ( सिन्धुर्न ) जैसे कि सिन्धु ( प्रावीविपत् ) कँपाता है, इसीप्रकारसे कँपाता है । ( सोमः ) वह सोमरूपपरमात्मा ( पवमानः ) सबको पवित्र करता है । ( मनीषाः ) मनका भी प्रेरक है । ( अन्तः पश्यन् ) सबका अन्तर्यामी होकर ( वृजना ) इस संसाररूपी यज्ञमें ( इमा अवराणि आतिष्ठति ) इन प्रकृतिके कार्य्योंको आश्रयण करता है । जिस प्रकार ( वृषभः ) सब बलको देनेवाला जीवात्मा ( जानन् ) चेतनरूपसे अधिष्ठाता बनकर ( गोषु ) इन्द्रियों में विराजमान होता है ।

**भावार्थ**—परमात्मा सबका अन्तर्यामी है वह सर्वान्तर्यामी होकर सर्वप्रेरक है " यः पृथिव्यां तिष्ठन् पृथिव्यामन्तरो यं पृथिवी न वेद यस्य पृथिवीशरीरम् यः पृथिवीमन्तरो यमयत्येष त आत्मान्तर्याम्यमृतः " इत्यादि वाक्य उक्त वेदके आधारपर निर्माण कियेगये हैं ।

स मत्सरः पृत्सु वन्वन्नवातः
सहस्ररेता अभि वाजमर्ष ।

इन्द्रायेन्दो पवमानो मनीष्यं१
शोरूर्मिमीरय गा इषण्यन् ॥ ८ ॥

सः । मत्सरः । पृतऽसु । वन्वन् । अवातः । सहस्रऽरेताः । अभि । वाजं । अर्ष । इंद्राय । इंदो इति । पवमानः । मनीषी । अंशो । ऊर्मिम् । ईरय । गाः । इषण्यन् ॥

पदार्थः—(सः) स परमात्मा (मत्सरः) आनन्दस्वरूपः (पृत्सु) यज्ञेषु (वन्वन्) सर्वविघ्नानि अपसारयन् (अवातः) स्थिरीभूय विराजते (सहस्ररेताः) अनेकधा बलयुक्तोऽस्ति (वाजम्) सर्वबलेभ्यः (अभि) आश्रयं दत्वा (अर्ष) व्याप्नोति (इन्दो) हे प्रकाशस्वरूप। (पवमानः) भवान् सर्वपावकः! (मनीषी) मनःप्रेरकश्च (गाः, अंशोः, इषण्यन्) इन्द्रियप्रसारं प्रेरयन् (ऊर्मिं, ईरय) आनन्दतरङ्गान् मामभिप्रेरयतु ॥

पदार्थ—(सः) वह परमात्मा (मत्सरः) आनन्दस्वरूप है। (पृत्सु) यज्ञोंमें (वन्वन्) सब विघ्नोंको नाश करताहुआ (अवातः) निश्चल होकर विराजमान है। (सहस्ररेताः) अनन्त प्रकार के बलोंसेयुक्त है। (वाजम्) सब बलोंको (अभि) आश्रय देकर (अर्ष) व्याप्त हो रहा है (इन्दो) हे प्रकाशस्वरूपपरमात्मन् (पवमानः) आप सबको पवित्र करनेवाले हैं। (मनीषी) मनके प्रेरक हैं। (अंशोः इषण्यन्) इन्द्रियोंकी प्रेरणा करते हुए (उर्मिमीरय) आनन्दकी लहरोंको हमारे ओर प्रेरित करें।

भावार्थ—जो पुरुष अनन्यभक्तिसे अर्थात्—एकमात्र ईश्वर-

परायण होकर ईश्वरकी उपासना करते हैं, परमात्मा उन्हें अवश्यमेव आनन्द-का प्रदान करता है ।

परि प्रियः कलशे देववात
इन्द्राय सोमो रण्यो मदाय ।
सहस्रधारः शतवाज इन्दुर्वाजी
न सप्तिः समना जिगाति ॥ ९ ॥

परि । प्रियः । कलशे । देवऽवातः । इंद्राय । सोमः । रण्यः । मदाय । सहस्रऽधारः । शतऽवाजः । इंदुः । वाजी । न । सप्तिः । समना । जिगाति ॥

पदार्थः—( प्रियः ) सर्वप्रियः परमात्मा ( देववातः ) विदुषां सुगमः ( सोमः ) सर्वोत्पादकः ( रण्यः ) रम्यः ( इन्द्राय, मदाय ) कर्मयोग्याह्लादाय ( सहस्रधारः ) अनन्तशक्तिसम्पन्नः ( शतवाजः ) बहुविधबलसम्पन्नः ( इन्दुः ) परमैश्वर्यसम्पन्नः सः ( सप्तिर्न ) विद्युच्छक्तिरिव ( वाजी ) बलरूपः ( समना, परि-जिगाति ) आध्यात्मिकयज्ञेषु ( कलशे ) विद्वज्जनान्तःकरणे विराजते ॥

पदार्थ—( प्रियः ) सर्वप्रियपरमात्मा ( देववातः ) जो विद्वानोंसे सुगम है वह ( सोमः ) सर्वोत्पादक ( रण्यः ) रमणीक ( इद्राय मदाय ) कर्मयोगीके आह्लादके लिये ( सहस्रधारः ) जो अनन्तप्रकारकी शक्तिसे सम्पन्न और ( शतवाजः ) अनन्तप्रकारके बलसे सम्पन्न है वह ( इन्दुः )

परमैश्वर्य्यशाली ( ससिर्न ) विद्युत्की शक्तिके समान ( वाजी ) बलरूप-परमात्मा ( सयना, परिजिगाति ) आध्यात्मिकयज्ञोंमें ( कलशे ) " कलाः शेरते अस्मिन् इति कलशम्" निः—१—१२ अन्तःकरणम्। जिसमें परमात्मा अपनी कलाओंके द्वारा विराजमान हो उसका नाम यहां कलश है। विद्वानोंके अन्तःकरणमें आकर उपस्थित होता है।

**भावार्थ**—जो लोग ब्रह्मविद्याद्वारा परमात्माके तत्वका चिन्तन करते हैं, परमात्मा अवश्यमेव उनके ज्ञानका विषय होता है।

स पूर्व्यो वसुविज्जायमानो
मृजानो अप्सु दुदुहानो अद्रौ।
अभिशस्तिपा भुवनस्य राजा
विदद्गातुं ब्रह्मणे पूयमानः ॥ १० ॥ ७ ॥

सः। पूर्व्यः। वसुऽवित्। जायमानः। मृजानः। अप्ऽसु। दुदुहानः। अद्रौ। अभिशस्तिऽपाः। भुवनस्य। राजा। विदत्। गातुं। ब्रह्मणे। पूयमानः ॥

पदार्थः—( सः ) स एव (पूर्व्यः) अनादिसिद्धः परमात्मा ( वसुवित् ) सर्वधनानां नेता ( जायमानः ) यः सर्वत्र व्याप्नोति ( मृजानः ) शुद्धः ( अप्सु ) कर्मसु (दुदुहानः) पूरितोभवति ( अद्रौ ) सर्वसंकटेषु ( अभिशस्तिपाः ) शत्रुतोरक्षकः ( भुवनस्य, राजा ) सर्वलोकानां शासकः ( ब्रह्मणे, पूयमानः ) कर्मसु पवित्रतां प्रददत् ( गातुम् ) उपासकाय ( विदत् ) पवित्रता प्रददाति ॥

पदार्थ—( सः ) वह ( पूर्व्यः ) अनादिसिद्धपरमात्मा ( वसुवित् ) सबधनोंका नेता ( जायमानः ) जो सब जगहपर व्यापक है । ( मृजानः ) शुद्ध है ( अप्सु ) कर्म्मोंमें ( दुदुहानः ) पूर्ण कियाजाता है । और ( अद्रौ ) सबप्रकारके संकटोंमें ( अभिशस्तिपाः ) शत्रुओंसे रक्षा करनेवाला है । ( भुवनस्य राजा ) सबभुवनोंका राजा है । ( ब्रह्मणे पूयमानः ) कर्म्मोंमें पवित्रता प्रदान करता हुआ ( गातुम् ) उपासकोंके लिये ( विदत् ) पवित्रता प्रदान करता है ।

भावार्थ—शुद्धभावसे उपासना करनेवाले लोगोंको परमात्मा सर्वप्रकारके ऐश्वर्य्य और पवित्रताओंका प्रदान करता है ।

त्वया हि नः पितरः सोम पूर्वे
कर्माणि चक्रुः पवमान धीराः ।
वन्वन्नवातः । परिधीरँपोर्णुवी
रेभिरश्वैर्मघवा भवा नः ॥ ११ ॥

त्वया । हि । नः । पितरः । सोम । पूर्वे । कर्माणि चक्रुः । पवमान । धीराः । वन्वन् । अवातः । परिऽधीन् । अप । ऊर्णु । वीरेभिः । अश्वैः । मघऽवा । भव । नः ॥

पदार्थः—( सोम ) हे परमात्मन् ! ( पूर्वे, पितरः ) पूर्वकालिकाः पितृपितामहादयः ( धीराः ) ये धीरास्ते ( त्वया ) त्वत्प्रेरणयैव(कर्माणि,चक्रुः)कर्माणिअकार्षुः(पवमान)हे सर्वपावक ! ( वन्वन् ) भवन्तं सेवमानः ( अवातः ) निश्चलः सन् ( परिधीन् ) राक्षसान् ( अपोर्णु ) अपसारयाणि ( वीरेभिः ) वीर-

पुरुषैः ( अश्वैः ) शक्तिसम्पन्नैश्च अस्मान् ( मघवा, भव ) ऐश्वर्यसम्पन्नं कुर्याः ॥

पदार्थ—( सोम ) हे परमात्मन् ! ( पूर्वे, पितरः ) पूर्वकालके पिता पितामह ( धीराः ) जो धीर हैं ( त्वया ) तुम्हारी प्रेरणासे (कर्म्माणि, चक्रुः) कर्म्मोंको करते थे । ( पवमान ) हे सबको पवित्र करनेवाले परमात्मन् ! ( वन्वन् ) आपका भजन करतेहुए ( अवातः ) निश्चल होकर ( परिधीन् ) राक्षसोंको ( अपोर्णु ) दूर करें ( वीरेभिः ) वीरपुरुषोंसे ( अश्वैः ) और जो शक्तिसम्पन्न हैं उनसे (नः) हमको ( मघवा, भव ) ऐश्वर्यसम्पन्न करें ।

भावार्थ—परमात्माकी आज्ञा पालन करनेसे देशमें ज्ञानी तथा विज्ञानीपुरुषोंकी उत्पत्ति होती है और देश ऐश्वर्य्यसम्पन्न होता है इसप्रकार राक्षसभावनिवृत्त होकर सभ्यताके भावका प्रचार होता है ।

यथापंवथा मनंवे वयोधा
अंमित्रहा वंरिवोविद्धविष्मान् ।
एवा पंवस्व द्रविंणं दधांन इन्द्रे
सं तिष्ठ जनयायुंधानि ॥ १२ ॥

यथां । अपंवथाः । मनंवे । वयःऽधाः । अमित्रऽहा । वरिवःऽवित् । हविष्मान् । एव । पवस्व । द्रविणं । दधांनः । इन्द्रे । सं । तिष्ठ । जनयं । आयुंधानि ॥

पदार्थः—हे परमात्मन् ! ( यथा, मतवे ) यथा विज्ञानिने ( अपवथाः ) धनादि दानाय भवान् तं पवित्रयति ( वयोधाः )

अन्नादिदाता ( अमित्रः ) दुष्टशासकः ( वरिवो वित् ) ऐश्वर्यदाता ( हविष्मान् ) हव्ययुक्तोभक्तः भवत्प्रियोभवति तथैव ( एव ) निश्चयेन ( पवस्व ) मां पुनीहि ( इन्द्रे ) कर्मयोगिनि च ( द्रविणं, दधानः ) ऐश्वर्यं धारयन् ( संतिष्ठ ) आगत्य विराजताम् ( ( जनय, आयुधानि ) कर्मयोगिभ्यः विविधान्यायुधानि निष्पादयतु ॥

पदार्थ—हे परमात्मन् ! ( यथा ) जिसप्रकार ( मनवे ) विज्ञानी-पुरुषके लिये ( अपवथाः ) धनादिक देनेके लिये आप पवित्र करते हैं अन्नादिकों के देनेवाला ( अमित्रः ) दुष्टोंको दण्ड देनेवाला ( वरिवोवित् ) और धनादि ऐश्वर्य्यको देनेवाला ( हविष्मान् ) हविवाला भक्तपुरुष आप-को प्रिय होता है । इसप्रकार हे परमात्मन् ! ( एव ) निश्चय करके ( पवस्व ) आप हमको पवित्र करें । और ( इन्द्रे ) कर्म्मयोगीमें ( द्रविणं, दधानः ) ऐश्वर्य्यको धारण करते हुए आप ( सन्तिष्ठ ) आकर विराजमान हों । तथा (जनय, आयुधानि) कर्म्मयोगीके लिये अनन्तप्रकारके आयुधोंको उत्पन्न करें ।

भावार्थ—परमात्मपरायणपुरुष परमात्मामें चित्तवृत्तिनिरोधद्वारा अनन्त प्रकारके ऐश्वर्य्य और आयुधोंको उत्पन्न करके देशको अभ्युदय-शाली बनाते हैं ।

पवस्व सोम मधुमाँ ऋतावापो
वसानो अधि सानो अव्ये ।
अव द्रोणानि घृतवन्ति सीद
मदिन्तमो मत्सर इन्द्रपानः ॥ १३ ॥

पवस्व । सोम । मधुऽमान् । ऋतऽवा । अपः । वसानः ।

अधि । सानौ । अव्ये । अव । द्रोणानि । घृतऽवन्ति । सीद ।
मदिन्ऽतमः । मत्सरः । इन्द्रऽपानः ॥

पदार्थः—( सोम ) हे परमात्मन् ! भवान् ( मधुमान् ) आनन्दमयोऽस्ति ( ऋतावापः ) कर्मरूपयज्ञानामधिष्ठाता च ( अव्ये ) रक्षणीये ( अधिसानौ ) सर्वोपर्युच्चपदे ( वसानः ) विराजते च ( पवस्व ) मामपिरक्षतु ( द्रोणानि ) अन्तःकरण-रूपकलशाः ( घृतवन्ति ) येहि सस्नेहास्तेषु ( अवसीद ) विराजताम् ( मत्सरः ) भवान् सकलजनतृप्तिकारकः(मदिन्तमः) आह्लादकतमश्च ( इन्द्रपानः ) कर्मयोगितृप्तिकारणं च ॥

पदार्थ—( सोम ) हे परमात्मन् ! आप ( मधुमान् ) आनन्दमय हैं ( ऋतावापः ) कर्मरूपीयज्ञके अधिष्ठाता हैं । ( अव्ये ) रक्षायुक्त ( अधि-सानौ ) सर्वोपरि उच्च पदमें ( वसानः ) विराजमान हैं । ( पवस्व ) आप हमारी रक्षा करें । और ( द्रोणानि ) अन्तःकरणरूपी कलश ( घृतवन्ति ) जोस्नेहवाले हैं । ( अवसीद ) उनमें आकर स्थिर हों । आप ( मत्सरः ) सबके तृप्तिकारक हैं । और ( मदिन्तमः ) अत्यन्त ह्लादक हैं । और आप ( इन्द्रपानः ) कर्म्मयोगीकी तृप्ति के कारण हैं ।

भावार्थ—जिन पुरुषोंके अन्तःकरण प्रेमरूप वारिसे नम्रभावको ग्रहण किये हुए हैं उनमें परमात्माके भाव आविर्भावको प्राप्त होते हैं ।

वृष्टिं दिवः शतधारः पवस्व
सहस्रसा वाजयुर्देववीतौ ।
सं सिन्धुभिः कलशे वावशानः
समुस्रियाभिः प्रतिरन्न आयुः ॥ १४ ॥

वृष्टिं । दिवः । शतऽधारः । पवस्व । सहस्रऽसाः । वाजऽयुः । देवऽवीतौ । सं । सिंधुऽभिः । कलशे । वावशानः । सं । उस्रियाभिः । प्रऽतिरन् । नः । आयुः ॥

पदार्थः—( शतधारः ) भवाननन्तशक्तियुक्तः ( दिवः, वृष्टिम् ) द्युलोकाद्वृष्ट्या ( सं, पवस्व ) सम्यक् तर्पयतु ( देववीतौ ) यज्ञेषु ( वाजयुः ) विविधबलानां धारकोऽस्ति ( सिन्धुभिः ) प्रेमभावैः ( कलशे ) ममान्तःकरणे ( वावसानः ) वासं कुर्वन् ( उस्रियाभिः ) ज्ञानरूपशक्तिभिः ( नः ) मम ( आयुः ) वयः ( प्रातिरन् ) द्राघयतु ॥

पदार्थ—( शतधारः ) आप अनन्तशक्तियुक्त हैं । और ( दिवः ) द्युलोकसे ( वृष्टिम् ) वृष्टि ( संपवस्व ) से पवित्र करें । ( देववीतौ ) यज्ञोंमें ( वाजयुः ) अनेक प्रकारके बलोंको प्राप्त हैं । और ( सिन्धुभिः ) प्रेमके भावोंसे ( कलशे ) हमारे अन्तःकरणमें ( वावसानः ) वास करते हुए ( उस्रियाभिः ) ज्ञानरूपशक्तियोंसे ( नः ) हमारी ( आयुः ) उमरको ( प्रतिरन् ) बढ़ायें ।

भावार्थ—जो पुरुष परमात्माके ज्ञानविज्ञानादिभावोंको धारण करके अपनेको योग्य बनाते हैं परमात्मा उनके ऐश्वर्य्यको अवश्यमेव बढाता है ।

एष स्य सोमो मतिभिः पुना-
नोऽत्यो न वाजी तरती दरातीः ।

पयो न दुग्धमदितेरिषिरमुर्विव
गातुः सुयमो न वोळ्हा ॥ १५ ॥ ८ ॥

एषः । स्यः । सोमः । मतिऽभिः । पुनानः । अत्यः । न । वाजी । तरति । इत् । अरातीः । पयः । न । दुग्धं । अदितेः । इषिरं । उरुऽइव । गातुः । सुऽयमः । न । वोळ्हा ॥

पदार्थः—( एषः, स्यः, सोमः ) असौ प्रसिद्धः परमात्मा ( मतिभिः ) ज्ञानविज्ञान द्वारेण ( पुनानः ) पावयन् ( अत्योन ) विद्युदिव ( वाजी ) बलवान् ( अरातीः ) शत्रून् ( इत्, तरति ) अवश्यमभिभवति सच ( अदितेः ) गोः ( दुग्धम्, पयः, न ) दोहनिष्पन्नदुग्धमिव ( इषिरम् ) सर्वप्रियोऽस्ति ( उरु, गातुः, इव ) विस्तीर्णमार्गइव सर्वाश्रयणीयोऽस्ति । ( वोल्हा, न ) तथाच सम्यङ्नियन्तेवास्ति ॥

पदार्थ—( एषः स्यः सोमः ) यह उक्तपरमात्मा ( मतिभिः ) ज्ञानविज्ञानोंद्वारा ( पुनानः ) पवित्र करता हुआ ( अत्योन )। विद्युत्के समान ( वाजी ) बलरूप परमात्मा ( अरातीः शत्रुओंको ( इत् ) अवश्य ( तरति ) उल्लङ्घन करता है वह परमात्मा (अदितेः) गौके (दुग्धम्) दुहेहुए ( पयः ) दुग्ध के ( न ) समान ( इषिरम् ) सर्वप्रिय हैं ( उरु ) विस्तीर्ण गातुरिव मार्गके समान सबका आश्रयणीय है। तथा ( वोल्हा ) सम्यक् नियन्ताके ( न ) समान है।

भावार्थ—परमात्माके सदृश इस संसाररमें कोई नियन्ता नहीं उसी के नियममें सबलोकलोकान्तर भ्रमण करते हैं।

स्वायुधः सोतृभिः पूयमानो
नोऽभ्यर्ष गुह्यं चारु नाम ।
अभि वाजं सप्तिरिव श्रव-
स्याभि वायुमभि गा देव सोम ॥ १६ ॥

सुऽआयुधः । सोतृऽभिः । पूयमानः । अभि । अर्ष । गुह्यं । चारु । नाम । अभि । वाजं । सप्तिःऽइव । श्रवस्या । अभि । वायुं । अभि । गाः । देव । सोम ।

पदार्थः—हे परमात्मन् ! ( गुह्यम् ) सर्वोपरिरहस्यं (चारु) रम्या (नाम)या संज्ञा भवतः (अभ्यर्ष) तज्ज्ञानं कारयतु । भवान् ( सोतृभिः, पूयमानः ) उपासकैः स्तूयमानः ( स्वायुधः ) स्वाभाविकशक्तिसम्पन्नश्चाऽस्ति । ( सप्तिरिव ) विद्युदिव ( श्रवस्या, अभि ) ऐश्वर्याभिमुखं करोतु ( वायुमभि ) प्राण-विद्यावेत्तारं च मां करोतु ( देव ) हे दिव्यशक्तिसम्पन्न ! (गाः) इन्द्रियाणाम् ( अभिगमय ) नियमनज्ञातारं च करोतु ।

पदार्थ—हे परमात्मन् ! ( गुह्यम ) सर्वोपरिरहस्य ( चारु ) श्रेष्ठ ( नाम ) जो तुम्हारी संज्ञा है । ( अभ्यर्ष ) उसका ज्ञान करायें आप ( सोतृभिः, पूयमानः ) उपासकलोगों से स्तूयमान हैं । ( स्वायुधः ) स्वाभाविकशक्तिसे युक्त हैं । और ( सप्तिरिव ) विद्युत्के समान ( श्रवस्याभि ) ऐश्वर्य्यके सम्मुख प्राप्त कराइये और ( वायुमभि ) हमको प्राणोंकी विद्याका वेत्ता बनाइये । ( देव ) हे सर्वशक्तिसम्पन्न-परमेश्वर ! हमको ( गाः ) इन्द्रियोंके ( अभिगमय ) नियमनका ज्ञाता बनाइये ।

भावार्थ—जो लोग परमात्मा पर विश्वास रखते हैं वे अवश्यमेव संयमी बनकर इन्द्रियोंके स्वामी बनते हैं।

शिशुं जज्ञानं हर्यतं मृजन्ति
शुम्भन्ति वह्निं मरुतो गणेन ।
कविर्गीर्भिः काव्येना कविः
सन्त्सोमः पवित्रमत्येति रेभन् ॥ १७ ॥

शिशुं । जज्ञानं । हर्यतः । मृजंति । शुंभंति । वह्निं । मरुतः । गणेन । कविः । गीःऽभिः । काव्येन । कविः । सन् । सोमः । पवित्रं । अति । एति । रेभन् ॥

पदार्थः—( जज्ञानम् ) शश्वत्प्रकाशमानं ( शिशुम् ) परमात्मानम् ( हर्यतः ) योहि नितान्तकमनीयस्तम् ( मृजन्ति ) उपासका बुद्धिविषयं कुर्वन्ति ( शुंभन्ति ) स्तुतिभिर्गुणांश्च वर्णयन्ति । ( मरुतः ) विद्वांसः ( वह्निम् ) तं परमात्मानं ( गणेन ) गुणसमूहेन वर्णयन्ति ( कविः ) कवयश्च ( गीर्भिः ) वाग्भिः ( काव्येन ) कवितयाच तं स्तुवन्ति ( सोमः ) परमात्मा ( पवित्रम् ) पवित्रगुणः ( रेभन्, सन् ) शब्दंकुर्वन्सन् कारणावस्थायामतिसूक्ष्मप्रकृतिम् ( अत्येति ) अतिक्रामति ॥

पदार्थ—( शिशुम् ) "श्यति सूक्ष्मं करोति प्रलयकाले जगदिति शिशुः परमात्मा" उस परमात्माको ( जज्ञानम् ) जो सदा प्रगट है। ( हर्यतः ) जो अत्यन्त कमनीय है। उसको उपासकलोग ( मृजन्ति )

बुद्धिविषय करते हैं। और ( शुंभन्ति ) उसकी स्तुतिद्वारा उसके गुणोंका वर्णन करते हैं। और ( मरुतः ) विद्वान्लोग ( वाह्निम् ) उस गतिशील परमात्माका ( गणेन ) गुणोंके गणों द्वारा वर्णन करते हैं। और ( कविः ) कविलोग ( गीर्भिः ) वाणीद्वारा और ( काव्येन ) कवित्वसे उसकी स्तुति करते हैं। ( सोमः ) सोमस्वरूप ( पवित्रम् ) पवित्र वह परमात्मा कारणावस्थामें अतिसूक्ष्म प्रकृतिको ( रेभन्, सन् ) गर्जता हुआ ( अत्येति ) अतिक्रमण करता है।

भावार्थ—परमात्माके अनन्त सामर्थ्यसे यह ब्रह्माण्ड सूक्ष्मसे स्थूलावस्थाको प्राप्त होता है और उसीसे प्रलयावस्थाको प्राप्त होजाता है।

ऋषिमना य ऋषिकृत्स्वर्षाः
सहस्रणीथः पदवीः कवीनाम्।
तृतीयं धाम महिषः सिषा-
सन्त्सोमो विराजमनु राजति ष्टुप् ॥ १८ ॥

ऋषिऽमनाः। यः। ऋषिऽकृत्। स्वःऽसाः। सहस्रऽनीथः। पदऽवीः। कवीनां। तृतीयं। धाम। महिषः। सिसासन्। सोमः। विऽराजं। अनु। राजति। स्तुप् ॥

पदार्थः—( सोमः ) सोमस्वरूपः परमात्मा (सिसासन्) पालनेच्छां कुर्वन् ( महिषः ) सर्वपूज्यः ( तृतीयं, धाम ) देवयानापितृयानाभ्यापृथक् तृतीये मुक्तिधाम्नि ( विराजम् ) विराजन्तं ज्ञानयोगिनम् ( अनु, राजति ) प्रकाशयति ( स्तुप् ) स्तूयमानश्चास्ति ( कवीना, पदवीः ) क्रान्तदर्शिनां कवीनां मुख्यस्थानं

चास्ति ( सहस्रनीथः ) सहस्रधा स्तवनीयः ( ऋषिमनाः ) सर्वज्ञानसाधनमनोयुक्तः सः ( ऋषिकृत् ) ज्ञानप्रदः ( स्वर्षाः ) सूर्यादिकानामपि प्रकाशकः । स एव जिज्ञासुभिः उपास्यः ।

**पदार्थ**—( सोमः ) सोमस्वरूपपरमात्मा ( सिसासन् ) पालनकी इच्छा करता हुआ ( महिषः ) जो महान् है वह परमात्मा ( तृतीयं, धाम ) देवयान और पितृयान इन दोनोंसे पृथक् तीसरा जो मुक्तिधाम है । उसमें ( विराजम् ) विराजमान जो ज्ञानयोगी है उसको ( अनुराजति ) प्रकाश करनेवाला है । और ( स्तुप् ) स्तूयमान है । ( कवीनाम्, पदवीः ) जो क्रान्तदर्शियोंकी पदवी अर्थात् मुख्य स्थान है । और ( सहस्रनीथः ) अनन्तप्रकारसे स्तवनीय है । ( ऋषिमनाः ) सर्वज्ञानके साधनरूप मनवाला वह परमात्मा ( यः ) जो ( ऋषिकृत् ) सब ज्ञानोंका प्रदाता ( स्वर्षाः ) सूर्यादिकोंको प्रकाशक है । वह जिज्ञासुके लिये उपासनीय है ।

**भावार्थ**—परमात्मा सबलोकलोकान्तरोंका नियन्ता है तथा मुक्त धाममें विराजमान पुरुषोंका भी नियन्ता है ।

चमूषच्छ्येनः शकुनो विभृत्वा
गोविन्दुर्द्रप्स आयुधानि बिभ्रत् ।
अपामूर्मिं सचमानः समुद्रं
तुरीयं धाम महिषो विवक्ति ॥ १९ ॥

चमूऽसत् । श्येनः । शकुनः । विऽभृत्वा । गोऽविन्दुः । द्रप्सः । आयुधानि । बिभ्रत् । अपां । ऊर्मिं । सचमानः । समुद्रं । तुरीयं । धाम । महिषः । विवक्ति ॥

पदार्थः—(अपामूर्मिम्) प्रकृतेः सूक्ष्मतमशक्तिभिः (सचमानः) सङ्गतः ( समुद्रम् ) उत्पत्तिस्थितिप्रलयाश्रयः ( तुरीयं, धाम ) स चतुर्थधाम परमपदं परमात्माऽस्ति ( महिषः ) महान् पुरुषः उक्ततुरीयपरमात्मानं ( विवक्ति ) वर्णयतिसएव ( चमूसत् ) प्रत्येकबले सीदति ( श्येनः ) सर्वाधिकप्रशंसनीयः ( शकुनः ) सर्वशक्तिमान् ( गोविन्दुः ) उपास्यतर्पकः (द्रप्सः) द्रुतगतिः ( आयुधानि, बिभ्रत् ) अनन्तशक्तिंदधत् संसारस्योत्पादकः ।

पदार्थ—( अपामूर्मिम् ) प्रकृतिकी सूक्ष्मसे सूक्ष्मशक्तियोंके साथ ( सचमानः ) जो सङ्गत है और ( समुद्रम् ) "सम्यक् द्रवन्ति भूतानि यस्मात् स समुद्रः," जिससे सब भूतोंका उत्पत्ति स्थिति और प्रलय होता है । वह ( तुरीयम् ) चौथा ( धाम ) परमपद परमात्मा है । उसको ( महिषः ) महते इतिमहिषः महिषइति महन्नामसु नि० ३—१ ३—पठितम् । महापुरुष उक्त तुरीयपरमात्माका ( विवक्ति ) वर्णन करता है । वह परमात्मा ( चमूसत् ) जो प्रत्येक बलमें स्थित है ( श्येनः ) सर्वोपरि प्रशंसनीय है और ( शकुनः ) सर्वशक्तिमान् है । ( गोविन्दुः, ) यजमानोंको तृप्त करके जो ( द्रप्सः ) शीघ्र गतिवाला है ( आयुधानि, विभ्रत् ) अनन्तशक्तियोंको धारण करता हुआ इस संपूर्णसंसारका उत्पादक है ।

भावार्थ—परमात्मा इस विविध रचनाका नियन्ता है उसने अन्तरिक्षलोकको सम्पूर्णभूतोंके इतस्ततः भ्रमणका स्थान बनाया है ।

मर्यो न शुभ्रस्तन्वं मृजानोऽत्यो न सृत्वा सनये धनानाम् ।

वृषेव यूथा परि कोशमर्ष
न्कनिक्रदच्चम्वोरा विवेश ॥ २० ॥

मर्यः । न । शुभ्रः । तन्वं । मृजानः । अत्यः । न । सृत्वा । सनये । धनानां । वृषा इव । यूथा । परि । कोशं । अर्षन् । कनिक्रदत् । चम्वोः । आ । विवेश ॥

पदार्थः—( यूथा, वृषेव ) सपरमात्मा यथा सेनापतिः संघं प्राप्नोति तथा ( कोशम्, अर्षन् ) ब्रह्माण्डरूपकोशं प्राप्नुवन् ( कनिक्रदत् ) उच्चस्वरेण गर्जन् ( चम्वोः, पर्याविवेश ) अस्मिन्ब्रह्माण्डरूपिविस्तृतप्रकृतिखण्डे सम्यक् प्राविशति । ( न ) यथाच ( मर्यः ) मनुष्यः ( शुभ्रस्तन्वं मृजानः ) शुभ्रशरीरं दधत् ( अत्योन ) अत्यन्तगतिशीलपदार्था इव ( धनाना, सनये ) धनप्राप्तये ( सृत्वा ) गमनशीलो भूत्वा कटिबद्धो भवति तथैव प्रकृतिरूपैश्वर्यं धारयितुं परमात्मा सदैवोद्यतः ॥

पदार्थ—वह परमात्मा ( यूथा, वृषेव ) जिसप्रकार एक संघको उसका सेनापति प्राप्त होता है । इसीप्रकार (कोशम्) इस ब्रह्माण्डरूपी कोशको ( अर्षन् ) प्राप्त होकर ( कनिक्रदत् ) उच्चस्वरसे गर्जताहुआ ( पर्याविवेश ) भलीभाँति ( चम्वोः ) इस ब्रह्माण्डरूपी विस्तृत प्रकृतिखण्डमें प्रविष्ट होता है । और ( न ) जैसे कि ( मर्यः ) मनुष्य ( शुभ्रस्तन्वं, मृजानः, ) शुभ्रशरीरको धारण करता हुआ ( अत्योन ) अत्यन्त गतिशीलपदार्थोंके समान ( सनये ) प्राप्तिके लिये ( सृत्वा ) गतिशील होताहुआ ( धनानाम् ) धनोंकेलिये कटिबद्ध होता है इसीप्रकार प्रकृतिरूपी ऐश्वर्य्यको धारण करनेके लिये परमात्मा सदैव उद्यत है ।

भावार्थ—जिसप्रकार मनुष्य इस स्थूलशरीरको चलाता है अर्थात् जीवरूपसे इसका अधिष्ठाता है एवंपरमात्मा इसप्रकृति रूपशरीरंका अधिष्ठाता है।

पवंस्वेन्दो पवमानो महोभिः
कनिक्रदत्परि वारांण्यर्ष ।
क्रीळंञ्चम्वोॾ॑रा विंश पूयमान
इन्द्रंते रसो मदिरो ममत्तु ॥ २१ ॥

पवंस्व । इंदोइति । पवंमानः । महःऽभिः । कनिक्रदत् । परि । वाराणि । अर्ष । क्रीळंन् । चम्वोः । आ । विश । पूयमानः । इंद्रं । ते । रसः । मदिरः । ममत्तु ॥

पदार्थः—( इन्दो ) हेप्रकाशस्वरूप परमात्मन् ! ( महोभिः, पवमानः ) श्रेष्ठजनैरुपास्यमानो भवान् ( पवस्व ) मां पावयतु ( कनिक्रदत् ) वेदवाग्भिः शब्दायमानो भवान् ( वाराणि, पर्यर्ष ) श्रेष्ठपुरुषान् लभताम् ( चम्वोः, क्रीळन् ) ब्रह्माण्डे क्रीडां कुर्वन् ( पूयमानः ) सर्वान् पावयन् ( आविश ) मदन्तःकरणे निवसतु हे परमात्मन् ! ( ते, रसः ) भवत आनन्दः ( मदिरः ) यः सर्वाह्लादकः सः ( इन्द्रं, ममत्तु ) कर्मयोगिनं तर्पयतु ।

पदार्थ—( इन्दो ) हे प्रकाशस्वरूप ( महोभिः ) महापुरुषोंसे ( पवमानः ) उपास्यमान आप ( पवस्व ) हमको पवित्र करें । और

( कनिक्रदत् ) वैदिकवाणियोंके द्वारा शब्दायमान होते हुए आप ( वाराणि ) श्रेष्ठपुरुषोंके प्रति ( पर्य्यर्ष ) प्राप्त हों। और ( चम्वोः,-क्रीळन् ) इस ब्रह्माण्डमें क्रीडा करते हुए । और ( पूयमानः ) सबको पवित्र करते हुए ! ( आविश ) हमारे अन्तःकरणमें आकर प्रविष्ट हों। हे परमात्मन् ! ( ते ) तुम्हारा ( रसः ) आनन्द ( मादिरः ) जो ह्लादित करनेवाला है। वह ( इन्द्रम् ) कर्म्मयोगीको ( ममत्तु ) प्रसन्न करें।

भावार्थ—परमात्माके आनन्दाम्बुधिके रसको केवल कर्म्मयोगीही पान कर सकता है आलसी निरुद्यमीलोग उक्त आनन्दके अधिकारी कदापि नहीं होसकते।

प्रास्य धारा बृहतीरसृग्रन्नक्तो
गोभिः कलशाँ आ विवेश ।
साम कृण्वन्त्सामन्यो विपश्चि
त्क्रन्दन्नेत्यभि सख्युर्न जामिम् ॥ २२ ॥

प्र । अस्य । धाराः । बृहतीः । असृग्रन् । अक्तः । गोभिः । कलशान् । आ । विवेश । साम । कृण्वन् । सामन्यः । विपःऽचित् । क्रंदन् । एति । अभि । सख्युः । न । जामिं ॥

पदार्थः—( अस्य ) अस्य परमात्मनः ( बृहतीः, धाराः ) आनन्दस्य महत्यो धाराः ( प्रासृग्रन् ) याः परमात्मप्रेरणया रचिताः ( अक्तः ) सर्वव्यापकः परमात्मा ( गोभिः ) स्वज्ञान-ज्योतिर्भिः ( कलशान् ) उपासकान्तःकरणानि ( आविवेश ) प्रविशति ( साम, कृण्वन् ) अखिलंजगति शान्तिं तन्वन्

( सामन्यः ) शान्तितत्परः ( विपश्चित् ) सर्वज्ञः सः ( सख्युः ) मित्रस्य ( जामिं, न ) हस्तं गृहीत्वेव ( क्रन्दन्, अभ्येति ) शुभशब्दान्कुर्वन् मां प्राप्नोतु ॥

पदार्थ—( अस्य ) इस परमात्माके आनन्दकी ( बृहतीः, धाराः ) बड़ी धारायें ( प्रासृग्रन् ) जो परमात्माकी ओरसे रची गई हैं । ( अक्तः ) सर्वव्यापकपरमात्मा ( गोभिः ) अपने ज्ञानकी ज्योतिद्वारा ( कलशान् ) उपासकोंके अन्तःकरणोंको ( आविवेश ) प्रवेश करता है । और ( सामकृण्वन् ) सम्पूर्णसंसार में शान्ति फैलाताहुआ ( सामन्यः ) शान्तिरसमें तत्पर परमात्मा ( विपश्चितः ) जो सर्वोपरि बुद्धिमान् है । वह ( सख्युः ) मित्रके ( न, जामिम् ) हाथको पकड़नेके समान ( क्रन्दन्, अभ्येति ) मंगलमयशब्द करताहुआ हमको प्राप्त हो ।

भावार्थ—परमात्मा अपने भक्तोंको सदैव सुरक्षित रखता है जिस प्रकार मित्र अपने मित्र पर सैदव रक्षाके लिये हाथ प्रसारित करता है एवं स्वमर्य्यादानुयायीलोगों पर ईश्वर सदैव कृपादृष्टि करता है ॥

अपघ्नन्नेषि पवमान शत्रून्प्रियां
न जारो अभिगीत इन्दुः ।
सीदन्वनेषु शकुनो न पत्वा सोमः
पुनानः कलशेषु सत्ता ॥ २३ ॥

अपऽघ्नन् । एषि । पवमान । शत्रून् । प्रियां । न । जारः । अभिऽगीतः । इंदुः । सीदन् । वनेषु । शकुनः । न । पत्वा । सोमः । पुनानः । कलशेषु । सत्ता ॥

पदार्थः—( पवमान ) हे सर्वपावक ! ( शत्रून्, अपघ्नन् ) अन्यायकारिशत्रून्नाशयन् ( एषि ) सत्कार्मिणं प्राप्नोति भवान् ( जारः ) अग्निः ( प्रियां, न ) यथा कमनीयकन्यां प्राप्तः तां संस्करोति यथा च ( अभिगीतः, इन्दुः ) सत्क्रियाभिराहूतः ज्ञानयोगी ( वनेषु,सीदन् ) भक्तेषु वर्तमानस्तेषु शमं वितनोति ( शकुनः, न ) यथा वा विद्युत् ( पत्वा ) स्वप्रभावेण पदार्थानुत्तेजयति एवं हि ( सोमः ) परमात्मा ( पुनानः ) सर्वान् पावयन् ( कलशेषु ) भक्तान्तःकरणेषु ( सत्ता ) स्थिरो भवति ॥

पदार्थ—( पवमान ) हे सबको पवित्र करनेवाले परमात्मन् ! ( शत्रून्, अपघ्नन् ) अन्यायकारी शत्रुओंको नाश करते हुए ( एषि ) आप सत्पुरुषोंको प्राप्त होते हैं। ( जारः, न ) जारयतीति जारोऽग्निः, जैसे अग्नि ( प्रियाम् ) कमनीयकन्याको प्राप्त होकर उसे संस्कृत करता है जिसप्रकार ( अभिगीतः, इन्दुः ) सत्कार द्वारा ह्वान किआ हुआ ज्ञानयोगी ( वनेषु, सीदन् ) भक्तोंमें स्थिर होता हुआ उनको शान्तिप्रदान करता है। और ( शकुनः ) विद्युत्शक्ति ( न ) जैसे ( पत्वा ) अपने प्रभावको डालकर उन्हें उत्तेजित करती है। इसीप्रकार ( सोमः ) सर्वोत्पादक परमात्मा ( पुनानः ) सबको पवित्र करता हुआ ( कलशेषु ) भक्त पुरुषोंके अन्तःकरणमें ( सत्ता ) स्थिर होता है।

भावार्थ—अन्यपदार्थ जीवात्माका ऐसा संस्कार नहीं कर सकते जैसा कि परमात्मा करता है अर्थात् परमात्मज्ञानके संस्कार द्वारा जीवात्मा सर्वथा शुद्ध होजाता है ॥

आ ते रुचः पवमानस्य सोम<br>
योषेव यन्ति सुदुघाः सुधाराः ।<br>
हरिरानीतः पुरुवारो अप्स्व<br>
चिक्रदत्कलशे देवयूनाम् ॥ २४ ॥ १० ॥ ५ ॥

आ । ते । रुचः । पर्वमानस्य । सोम । योषाऽइव । यंति । सुऽदुघाः । सुऽधाराः । हरिः । आऽनीतः । पुरुऽवारः । अप्ऽसु । अचिक्रदत् । कलशे । देवऽयूनां ॥

पदार्थः—( सोम ) हे सर्वोत्पादक परमात्मन् ! ( पवमानस्य, ते, रुचः ) सर्वपावकस्य तव दीप्तयः ( सुदुघः ) याः सम्यक् सर्वेषां परिपूरयित्र्यः ( सुधाराः ) शोभनधारायुक्ताश्च सन्ति ता भक्तजनानाभि ( योषेव, यन्ति ) अति प्रेमकर्त्री मातेव प्राप्नुवन्ति ( हरिः ) दुःखनाशकः परमात्मा ( आनीतः ) उपासितः ( अप्सु, पुरुवारः ) प्रकृतिरूपब्रह्माण्डे अत्यन्तवरणीयः सच ( देवयूनाम् ) परमात्मदिव्यशक्तिमिच्छूनामुपासकानां ( कलशे ) हृदये ( अचिक्रदत् ) सर्वदैव शब्दायते ।

पदार्थ—( सोम ) हे सर्वोत्पादक परमात्मन् ! ( पवमानस्य, ते, रुचः ) सबको पवित्र करनेवाले आपकी दीप्तियें ( सुदुघाः ) जो भलीभांति सबको परिपूर्ण करने वाली हैं ( सुधाराः ) और सुन्दरधारावों वाली हैं । वे भक्त पुरुषके प्रति ( योषेव, यन्ति ) परमप्रेम करनेवाली माताके समान प्राप्त होती हैं । ( हरिः ) जो सब दुःखोंको हरण करनेवाला परमात्मा है । वह ( आनीतः ) सबओरसे भलीभांति उपासनाकिआहुआ (अप्सु, पुरुवारः) प्रकृतिरूपीब्रह्माण्डमें अत्यन्त वरणीय हैं । वह ( देवयूनाम् ) परमात्माकी दिव्यशक्तिचाहनेवाले उपासकों के ( कलशे ) हृदयमें ( अचिक्रदत् ) सर्वदैव शब्दायमान है ।

भावार्थ—यों तो परमात्मा चराचर ब्रह्माण्डमें सर्वत्रैव देदीप्यमान है पर भक्तपुरुषोंके स्वच्छ अन्तःकरणोंमें परमात्माकी अभिव्यक्ति सबसे अधिक दीप्तिमती होती है ॥

॥ इति षण्णवतितमं सूक्तं दशमो वर्गश्च समाप्तः ॥

अथाष्टपञ्चाशदृचस्य सप्तनवतितमस्य सूक्तस्य–

ऋषिः—१–३ वसिष्ठः । ४–६ इन्द्रप्रमतिर्वासिष्ठः । ७–९ वृषगणो वासिष्ठः । १०–१२ मन्युर्वासिष्ठः । १३–१५ उपमन्युर्वासिष्ठः । १६–१८ व्याघ्रपाद्वासिष्ठः । १९-२१ शक्तिर्वासिष्ठः । २२–२४ कर्णश्रुद्वासिष्ठः । २५–२७ मृलीको वासिष्ठः । २८–३० वसुक्रोवासिष्ठः । ३१–४४ पराशरः । ४५–५८ कुत्सः ॥ पवमानः सोमो देवता छन्दः-१, ६, १०, १२, १४, १५, १९, २१, २५, २६, ३२, ३६, ३८, ३९, ४५, ४६, ५२, ५४, ५६, निचृत्त्रिष्टुप् । २–४, ७, ८, ११, १६, १७, २०, २३, २४, ३३, ४८, ५३ विराट्त्रिष्टुप् । ५, ९, १३, २२, २७–३०, ३४, ३५, ३७, ४२–४४, ४७, ५७, ५८ त्रिष्टुप् । १८, ४१, ५०, ५१, ५५ आर्ची स्वराट् त्रिष्टुप् । ३१, ४९ पादनिचृत्त्रिष्टुप् । ४० भुरिक्त्रिष्टुप् ॥ धैवतः स्वरः ॥

अथविदुषांगुणाः वर्ण्यन्ते ।

अब विद्वानोंके गुण वर्णन किये जाते हैं ।

अस्य प्रेषा हेमना पूयमानो
देवो देवेभिः समपृक्तरसम् ।
सुतः पवित्रं पर्येति रेभन्मितेव
सद्म पशुमान्ति होता ॥ १ ॥

अस्य । प्रेषा । हेमना । पूयमानः । देवः । देवेभिः । सम् । अपृक्त । रसं । सुतः । पवित्रं । परि । एति । रेभन् । मिताऽइव । सद्म । पशुऽमंति । होता ॥

पदार्थः—( सुतः ) विद्यया संस्कृतो विद्वान् ( रेभन् ) शब्दं कुर्वन् ( पवित्रं, पर्येति ) पवित्रतां लभते यथा ( पशुमन्ति ) यज्ञगृहम् ( मिता, इव, सद्म ) ज्ञानस्थानं नियमीपुरुष इव ( होता ) यज्ञकर्ता प्राप्नोति ( अस्य, प्रेषा ) उक्तविदुषो जिज्ञासुः पुरुषः ( हेमना, पूयमानः ) सुवर्णादिभूषणेन पवित्रः सन् ( देवेभिः, सम्पृक्तः ) विद्वद्भिः संगतः ( देवः ) दिव्य भाववान् सन् ( रसं, ) ब्रह्मानन्दं प्राप्नोति ।

पदार्थ—( सुतः ) विद्याद्वारा संस्कृत हुआ हुआ विद्वान् ( रेभन् ) शब्दायमान होता हुआ ( पवित्रं, पर्येति ) पवित्रताको प्राप्त होता है । जिसप्रकार ( पशुमन्ति ) ज्ञानवाले स्थानको ( मिता, इव ) नियमी पुरुषके समान ( होता ) यज्ञकर्ता पुरुष प्राप्त होता है । ( अस्य, प्रेषा ) उक्त विद्वान्की जिज्ञासा करनेवाला पुरुष ( हेमना, पूयमानः ) सुवर्णादि भूषणोंसे पवित्र होता हुआ ( देवेभिः, सम्पृक्तः ) विद्वानोंसे संगतिको लाभ

करता हुआ ( देवः ) दिव्यभाववाला ( रसम् ) ब्रह्मानन्दको प्राप्त होता है ।

भावार्थ—विद्वान्पुरुषोंके शिष्य अर्थात् जो पुरुष वेदवेत्ता विद्वानोंसे शिक्षा पाकर विभूषित होते हैं वे सदैव ऐश्वर्य्यसे विभूषित रहते हैं ॥

भद्रा वस्त्रा समन्या वसानो
महान्कविर्निवचनानि शंसन् ।
आ वच्यस्व चम्वोः पूयमानो
विचक्षणो जागृविर्देववीतौ ॥ २ ॥

भद्रा । वस्त्रा । समन्या । वसानः । महान् । कविः । निऽवचनानि । शंसन् । आ । वच्यस्व । चम्वोः । पूयमानः । विऽचक्षणः । जागृविः । देवऽवीतौ ॥

पदार्थः—( विचक्षणः ) उत्कटबुद्धिर्विद्वान् (जागृविः) जागरणशीलः ( चम्वोः, पूयमानः ) महतः समाजान् स्वज्ञान शक्त्या पावयन् ( समन्या, वस्त्रा ) शान्तिरक्षकान् ( भद्राः ) शोभनभावान् ( वसानः ) दधत् ( निवचनानि, शंसन् ) सुवक्तव्यानि जानन् ( महान्, कविः ) महाविद्वान् सम्पद्यते ( देववीतौ ) यज्ञे उक्तविद्वांसं ( आ, वच्यस्व ) इत्थं सुवाचा सत्कुर्यात् ।

पदार्थ—उक्तविद्वान् (विचक्षणः) विलक्षण बुद्धिवाला (जागृविः)

जागरणशील ( चम्वोः, पूयमानः ) बड़े २ समाजोंको अपने ज्ञानद्वारा पवित्र करता हुआ ( समन्या ) शान्तिकी ( वस्त्रा ) रक्षा करनेवाले ( भद्राः ) सुन्दर भावोंको ( वसानः ) धारण करता हुआ ( निवचनानि ) शंसन् जो सुन्दर वक्तव्य हैं उनका जानता हुआ ( महान्, कविः ) महा विद्वान् होता है । ( देववीतौ ) यज्ञके विषयमें उक्त विद्वानको ( आवच्यस्व ) ऐसा बचन कहकर सत्कृत करें ।

भावार्थ—जो पुरुष अपने आध्यात्मिकादियज्ञोंमें उक्त विद्वानोंकी प्रशंसा तथा सत्कार करते हैं वे अभ्युदयशील होते हैं ।

समु प्रियो मृज्यते सानौ अव्ये<br>
यशस्तरो यशसां क्षैतो अस्मे ।<br>
अभि स्वर धन्वा पूयमानो यूयं<br>
पात स्वस्तिभिः सदा नः ॥ ३ ॥

सं । उइति । प्रियः । मृज्यते । सानौ । अव्ये । यशःऽतरः । यशसां । क्षैतः अस्मेइति । अभि । स्वर । धन्व । पूयमानः । यूयं । पात । स्वस्तिऽभिः सदा । नः ॥

पदार्थः—यशस्विमध्ये यः ( यशस्तरः ) अतिविद्वानस्ति ( क्षैतः ) पृथिव्यादि लोकेषु ( यशसां, प्रियः ) यशः कामयमानः ( अव्ये, सानौ ) रक्षाया उच्चशिखरे ( समुमृज्यते ) साधु शोधितः एवंभूतो विद्वान् ( अस्मे ) अस्मभ्यम् ( धन्वा ) अन्तरिक्षे ( अभिस्वर ) सदुपदेशं कुर्यात् ( पूयमानः ) सर्वेषां पावयिता विद्वान् शश्वत्सत्कर्त्तव्यः । हे मनुष्याः ! यूयं पूर्वोक्त

विदुषः प्रति एवं ब्रूयात् ( स्वस्तिभिः ) कल्याणवाग्भिः ( यूयम् ) भवन्तः ( सदा ) सर्वदा ( नः ) अस्मान् ( पात ) रक्षन्तु ।

पदार्थ—यशस्वियों के मध्यमें जो ( यशस्तरः ) अत्यन्त विद्वान् है और ( क्षैतः ) पृथिव्यादि लोकोंमें ( यशसां, प्रियः ) यशोंको चाहनेवाला है ( सानौ, अव्ये ) रक्षाके उच्चशिखरमे जो ( समु, मृज्यते ) भलीभाँति मार्जन कियागया है उक्तगुणोंवाला विद्वान् ( अस्मे ) हमारे लिये ( धन्वा ) अन्तरिक्षमें ( अभि, स्वर ) हमारे लिये सदुपदेश करें ( पूयमानः ) सबको पवित्र करनेवाला विद्वान् सदा सत्कारयोग्य होता है हे मनुष्यो ! तुमलोग उक्तविद्वानोंके प्रति इसप्रकारका स्वस्तिवाचन कहो कि ( स्वस्तिभिः ) कल्याणरूपवाणियोंके द्वारा ( यूयं ) आपलोग ( सदा ) सदैव ( नः ) हमारी ( पात ) रक्षा करें ।

भावार्थ—स्वस्तिवाचनद्वारा मङ्गलको करनेवाले पुरुष सदैव उन्नतिशील होते हैं ॥

प्र गा॑यता॒भ्य॑र्चाम दे॒वान्त्सोमं॑
हि॒नोत म॒हते॒ धना॑य ।
स्वा॒दुः प॑वाते॒ अति॒ वार॒मव्य॒मा
सी॑दाति क॒लशं॑ देव॒युर्नः॑ ॥ ४ ॥

प्र । गा॒य॒त॒ । अ॒भि । अ॒र्चा॒म॒ । दे॒वान् । सोम॑म् । हि॒नोत॒ । म॒हते॑ । धना॑य । स्वा॒दुः । प॒वा॒ते॒ । अति॑ । वार॑म् । अव्य॑म् । आ । सी॒द॒ति॒ । क॒लश॑म् । दे॒व॒ऽयुः । नः॒ ।

पदार्थः—हे मनुष्याः ! यूयं ( महते, धनाय ) महैश्वर्य

प्राप्तये ( देवान् ) विदुषः ( प्रगायत ) स्तुत ( अभ्यर्चाम ) तानेव सत्कुरुत ( सोमं ) तत्रच सौम्यस्वभावं विद्वांसं ( हिनोतु ) प्रेरयत, यतः युष्मान्सः समुपदिशतु ( स्वादुः ) आनन्दप्रदपदार्थाय च ( पवाते ) पावयतु ( वारम्, अव्यम् ) वरणीयः रक्षकश्च स विद्वान् ( नः ) अस्माकम् ( कलशं ) हृदये ( आसीदाति ) स्थिरो भवतु ।

पदार्थ—हे मनुष्यो ! तुमलोग ( महते, धनाय ) बड़े ऐश्वर्य्यकी प्राप्तिके लिये ( देवान् ) विद्वान् लोगोंका ( प्र, गायत ) स्तवनकरो ( अभ्यर्चामः ) और उन्हीका सत्कारकरो और ( सोमं ) उनमे जो सौम्यगुण सम्पन्न विद्वान् है उसको ( हिनोत ) प्रेरणाकरो कि वह तुमको सदुपदेशकरे और ( स्वादुः ) आनन्ददायक पदार्थोंके लिये ( पवाते ) पवित्रकरे ( देवयुः ) दिव्यगुण और ( वारं ) वरणीय ( अव्यं ) रक्षक उक्त विद्वान् ( नः ) हमारे ( कलशं ) अन्तः करणमे ( आसीदाति ) स्थिरहो ॥

भावार्थ—परमात्मा उपदेशकरता है कि हेपुरुषो तुमकल्याणकी प्राप्ति केलिये विद्वानों का सत्कारकरो ॥

इन्दुर्देवानामुप सख्यमायन्त्स-
हस्रधारः पवते मदाय ।
नृभिः स्तवानो अनु धाम
पूर्वमगन्निन्द्रं महते सौभगाय ॥ ५ ॥

इंदुः । देवानां । उप । सख्यं । आऽयत् । सहस्रऽधारः । पवते । मदाय । नृऽभिः । स्तवानः । अनु । धाम । पूर्वं । अगन् । इन्द्रं । महते । सौभगाय ॥

पदार्थः—( इन्दुः ) कर्मयोगी ( देवानाम् ) विदुषाम् ( उपसख्यम् ) मैत्रीभावम् ( आयत् ) प्राप्नुवन् ( मदाय ) आनन्दाय ( पवते ) सर्वान्पावयति, सकर्मयोगी ( सहस्रधारः ) अनन्तशक्तिधारकः ( महते, सौभगाय ) महासौभाग्याय ( इन्द्रम् ) ऐश्वर्यं ( अगन् ) प्राप्नुवन् ( नृभिः, स्तवानः ) जनैः स्तूयमानः ( पूर्वं, धाम ) सर्वोच्चं धाम निर्माति ॥

पदार्थ—( इन्दुः ) कर्म्मयोगी विद्वान् ( देवानाम् ) विद्वानोंके ( उपसख्यं ) मैत्रीभावको ( उपायत् ) प्राप्त होता हुआ ( मदाय ) आनन्दके लिये ( पवते ) सबको पवित्र करता है । वह कर्म्मयोगी ( सहस्रधारः ) अनन्त प्रकारकी शक्तियें रखता हुआ ( महतेसौभगाय ) बड़े सौभाग्यके लिये ( इन्द्रं ) ऐश्वर्य्यको ( अगन् ) प्राप्त होता हुआ ( पूर्वं धाम ) सर्वोपरि धाम बनाता है ।

भावार्थ—जिन पुरुषोंके मध्यमें एक भी कर्मयोगी होता है वह सबको उद्योगी बनाकर पवित्र बनादेता है ।

स्तोत्रे राये हरिरर्षा पुनान
इन्द्रम्मदो गच्छतु ते भराय ।
देवैर्याहि सरथं राधो अच्छा
यूयं पात स्वस्तिभिः सदा नः ॥ ६ ॥

स्तोत्रे । राये । हरिः । अर्ष । पुनानः । इंद्रं । मदः । गच्छतु । ते । भराय । देवैः । याहि । सऽरथं । राधः । अच्छ । यूयं । पात । स्वस्तिऽभिः । सदा । नः ।

पदार्थः—( हरिः ) प्रलयकाले सर्ववस्तूनामात्मनि संहरणात् हरिः परमात्मा ( इन्द्रम् ) कर्मयोगिनम् ( पुनानः ) पावयन् ( अर्ष ) आयाति ( राये ) ऐश्वर्य्याय ( स्तोत्रे ) याज्ञिकस्तुतौ समायाति । हे हरे ! ( ते, मदः ) तवानन्दः ( भराय ) संग्रामाय ( गच्छतु ) प्राप्यताम् ( देवैः ) विद्वद्भिः ( याहि ) प्राप्नोतु माम् ( राधः, अच्छ ) शुभैश्वर्यं च ददातु ( यूयम् ) भवान् ( स्वस्तिभिः ) शुभवाग्भिः ( सदा ) शश्वत् ( नः, पात ) अस्मान् रक्षतु ।

पदार्थः—(हरिः) "हरतीति हरिः" जो प्रलयकालमें सब कार्य्योंको अपनेमें लय कर लेता है उसका नाम यहां हरि है । वह हरि ( इन्द्रम् ) कर्मयोगीको ( पुनानः ) पवित्र करता हुआ ( अर्ष ) आता है और राये) ऐश्वर्य्यके लिये ( स्तोत्रे ) यज्ञ सम्बन्धी स्तोत्रोंमें आकर प्राप्त होता है, हे हरि ! ( ते ) तुम्हारा ( मदः ) आनन्द ( भराय ) संग्रामके लिये ( गच्छतु ) प्राप्त हो और ( देवैः ) विद्वानोंके साथ ( याहि ) आकर आप हमको प्राप्त हो ( राधः ) ऐश्वर्य्य ( अच्छ ) हमको दें और ( यूयम् ) आप ( स्वस्तिभिः ) स्वस्तिवाचनोंसे ( नः ) हमारी सदाके लिये ( पात ) रक्षा करें ।

भावार्थ—जो परमात्मा प्रलयकालमें सब वस्तुओंका एकमात्र आधार होता हुआ विराजमान है वह परमात्मा हमको आनन्द प्रदान करे ।

प्र काव्यमुशनेव ब्रुवाणो देवो
देवानां जनिमा विवक्ति ।
महिव्रतः शुचिबन्धुः पावकः
पदा वराहो अभ्येति रेभन् ॥ ७ ॥

प्र । काव्यं । उसनाऽइव । ब्रुवाणः । देवः । देवानां । जनिम । विवक्ति । महिऽव्रतः । शुचिऽबंधुः । पावकः । पदा । वराहः । अभि । एति । रेभन् ॥

पदार्थः—( देवानाम् ) विदुषां मध्ये ( देवः ) योमुख्यविद्वान् सः ( उशना, इव, काव्यं, ब्रुवाणः ) कान्तिशीलविद्वानिव सन्दर्भरचनां कुर्वन् ( जनिम, विवक्ति ) अनेकजन्मवृत्तं वर्णयति ( महिव्रतः ) महाव्रतशीलः ( शुचिबन्धुः ) पवित्रताप्रियः ( पावकः ) सर्वेषां पावयिता ( वराहः ) सुतेजस्वी विद्वान् ( रेभन् ) साधूपदिशन् (पदा, अभ्येति) सन्मार्गेणागत्योपदिशति ॥

पदार्थ—( देवानाम् ) विद्वानोंके मध्यमें ( देवः ) जो मुख्य विद्वान् है वह ( उशनेव काव्यं ब्रुवाणः ) कान्तिशलि विद्वान्के समान संदर्भरचनाको करनेवाला विद्वान् ( जानिम विवक्ति ) अनेक जन्मजन्मान्तरोंका वर्णन करता है । ( महिव्रतः ) बड़ेव्रतको धारण करनेवाला ( शुचिबन्धुः ) पवित्रताका बन्धु ( पावकः ) सबको पवित्र करनेवाला है ( वराहः ) ( वरञ्चतदहश्चेतिवराहः वराहो विद्यतेयस्यस वराहः ) जिसका श्रेष्ठ तेज हो उसका नाम यहां वराह है । उक्तप्रकारका विद्वान् ( रेभन् ) सुन्दरोपदेश करता हुआ ( पदाऽभ्येति ) सन्मार्गद्वारा आकर उपदेश करता है ।

भावार्थ—जो उत्तम विद्वान् हैं वे अपनी रचना द्वारा पुनर्जन्मादि सिद्धान्तोंका वर्णन करते हैं वराह शब्द यहां सर्वोपरि तेजस्वी विद्वान्के लिये आया है, सायणाचार्य्य कहते हैं कि पाँव से भूमिको खोदता हुआ वराह जिसप्रकार शब्द करता है इसीप्रकार सोम भी शब्द करता हुआ आता है । कई एक नवीन लोग इसको वराहावतारमें भी लगाते हैं अस्तु वराहावतार वा सोम के पक्षमें काव्यका बनाना और उपदेश करना कदापि सङ्गत नहीं होसकता इसलिये वराह के अर्थ यहां विद्वान्के ही हैं ।

प्र हंसासस्तृपलं मन्युमच्छा-
मादस्तं वृषगणा अयासुः।
आङ्गूष्यं पवमानं सखायो।
दुर्मर्षं साकं प्रवदन्ति वाणम्॥ ८॥

प्र। हंसासः। तृपलं। मन्युं। अच्छ। अमात्। अस्तं। वृषऽगणाः। अयासुः। आंगूष्यं। पवमानं। सखायः। दुःऽमर्षं। साकं। प्र। वदंति। वाणं॥

पदार्थः—( वृषगणाः ) विद्वत्संघाः ( हंसासः ) हंसा इव विचरन्तः ( तृपलम् ) द्रुतम् ( मन्युम्, अच्छ, अमात्, अस्तम् ) दुष्टानां सम्यग् दमनकर्तारं परमात्मानम् ( आंगूष्यम् ) सर्वलक्ष्यम् ( पवमानम् ) पावयितारम् ( प्रायासुः ) प्राप्नुवन्ति, ततः ( सखायः ) मिथो मैत्रीभावं वर्द्धयन्तः ( वाणम् ) भजनीयम् (दुर्मर्षम्) दुःखलभ्यम् तं ( साकम् ) सहैव ( प्रवदन्ति ) वर्णयन्ति॥

पदार्थ—( वृषगणाः ) विद्वानोंके गण ( हंसासः ) हंसोंके समान विचरते हुए ( तृपलम् ) शीघ्रही ( मन्युमच्छ अमात् अस्तम् ) दुष्टोंके दमन करनेवाले उक्तपरमात्माको ( आंगूष्यम् ) जो सबका लक्ष्य है और ( पवमानम ) सबको पवित्र करनेवाला है उसको ( प्रायासुः ) प्राप्त होते हैं तदनन्तर ( सखायः ) परस्पर मैत्रीभावसे सङ्गत होते हुए ( वाणम् ) भजनीय ( दुर्मर्षम् ) जो दुःखसे प्राप्त होने योग्य लक्ष्य है उस लक्ष्यके ( साकम् ) साथ २ ( प्रवदन्ति ) वर्णन करते हैं।

**भावार्थ**—जो पुरुष परमात्माके सद्गुणोंको परमप्रेमसे धारण करते हैं वे मानो परमात्माके साथ मैत्री करते हैं वास्तवमें परमात्मा किसी का शत्रु वा मित्र नहीं कहा जा सकता ।

स रंहत उरुगायस्य जूतिं वृथा
क्रीळन्तं मिमते न गावः ।
परीणसं कृणुते तिग्मशृङ्गो
दिवा हरिर्ददृशे नक्तमृज्रः ॥ ९ ॥

सः । रंहते । उरुऽगायस्य । जूतिं । वृथा । क्रीळन्तं । मिमते । न । गावः । परीणसं । कृणुते । तिग्मऽशृंगः । दिवा । हरिः । ददृशे । नक्तं । ऋज्रः ॥

**पदार्थः**—( सः ) सपरमात्मा ( रंहते ) गतिशीलः ( उरुगायस्य ) तस्य सर्वोपास्यस्य ( जूतिम् ) गतिम् स्मरन्ति अपि ( गावः ) इन्द्रियाणि ( न, मिमते ) तत्तत्वं न लभन्ते ( वृथा,-क्रीलन्तम् ) अनायासेनैव यः क्रीडति ( तिग्मशृङ्गः ) अज्ञान-भर्जकः परमात्मा ( परीणसम् ) विविधज्ञानप्रकाशम् ( कृणुते ) करोति ( हरिः ) यश्चपरमात्मा ( दिवा, नक्तम् ) नक्तंदिवम् ज्ञानदृष्ट्या ( ऋज्रः ) एकरसः ( ददृशे ) दृश्यते ।

**पदार्थः**—( सः ) उक्तपरमात्मा ( रंहते ) गतिशील है ( उरुगायस्य ) सर्वोपासनीय परमात्माकी ( जूतिम् ) गतिको स्मरण करते हुए ( गावः ) इन्द्रियें ( न मिमते ) उसके तत्त्वको नहीं पासकतीं जो ( वृथा )

अनायाससे ( क्रीळन्तम् ) क्रीडा कर रहा है ( तिग्मशृङ्गः ) अज्ञानोंको नाश करनेवाला परमात्मा ( परीणसम् ) अनन्त प्रकारके ज्ञानका प्रकाश ( कृणुते ) करता है और ( हरिः ) जो परमात्मा ( दिवानक्तम् ) दिनरात ज्ञानदृष्टिसे ( ऋज्रः ) एकरस ( ददृशे ) देखा जाता है ।

भावार्थ—यद्यपि परमात्मा समय समय पर उत्पत्तिस्थिति और संहारका कारण है तथापि उसके स्वरूपमें कोई विकार न उत्पन्न होनेसे वह सदैव एकरस है ॥

इन्दुर्वाजी पवते गोन्योघा
इन्द्रे सोमः सह इन्वन्मदाय ।
हन्ति रक्षो बाधते पर्यरातीर्वरिवः
कृण्वन्वृजनस्य राजा ॥ १० ॥ ॥ १२ ॥

इंदुः । वाजी । पवते । गोऽन्योघाः । इंद्रे । सोमः । सहः । इन्वन् । मदाय । हंति । रक्षः । बाधते । परि । अरातीः । वरिवः । कृण्वन् । वृजनस्य । राजा ॥

पदार्थः—( वृजनस्य ) बलस्य ( राजा ) दीपयिता परमात्मा ( वरिवः ) ऐश्वर्यं (कृण्वन्) उत्पादयन् ( रक्षः, अरातीः ) शत्रून् राक्षसान् ( परिबाधते ) नाशयति (इन्दुः) प्रकाशमयः सः ( वाजी ) बलवान् ( गोन्योघाः ) गतिशीलः (पवते) मां पुनाति च ( सोमः ) सौम्यस्वभावः ( सहः ) सहनशीलः परमात्मा ( इन्द्रे ) कर्मयोगिनि ( मदाय ) आनन्दाय ( हन्ति ) विघ्नानि नाशयति ( इन्वन् ) तं प्रेरयति च ।

पदार्थ—( वृजनस्य ) बलका ( राजा ) प्रदीप्त करनेवाला परमात्मा ( वरिवः ) ऐश्वर्य्यको ( कृण्वन् ) करता हुआ ( अरातीः ) शत्रुरूप राक्षसों को ( परिबाधते ) नाश करता है और ( इन्दुः ) वह प्रकाशस्वरूप ( वाजी ) बलस्वरूप ( गोन्योघाः ) गतिशील ( पवते ) हमको पवित्र करता है और ( इन्द्रे ) कर्मयोगीविषयक ( सोमः ) सौम्यस्वभाव ( सहः ) शीलस्वभावकी ( इन्वन् ) प्रेरणा करता हुआ ( मदाय ) आनन्दके लिये उक्त गुणोंका प्रदान करता है ।

भावार्थ—कर्म्मयोगी उद्योगी पुरुषोंके सब विघ्नोंकी निवृत्ति करके परमात्मा कर्म्मयोगीके लिये आत्मभावोंका प्रकाश करता है ।

अध धारया मध्वा पृचान-
स्तिरो रोम पवते अद्रिदुग्धः ।
इन्दुरिन्द्रस्य सख्यं जुषाणो
देवो देवस्य मत्सरो मदाय ॥ ११ ॥

अध । धारया । मध्वा । पृचानः । तिरः । रोम । पवते । अद्रिऽदुग्धः । इंदुः । इन्द्रस्य । सख्यं । जुषाणः । देवः । देवस्य । मत्सरः । मदाय ॥

पदार्थः—( अद्रिदुग्धः ) चित्तवृत्त्या साक्षात्कृतः स परमात्मा । ( पवते ) अस्मान्पुनाति ( अध ) अथ च ( मध्वा, धारया ) आनन्दधारया ( पृचानः ) विदुषस्तर्पयन् (रोम, तिरः) अज्ञानं तिरस्कुर्वन् मां पुनाति ( देवस्य ) दिव्यरूपस्य तस्य ( मत्सरः ) आह्लादकानन्दः ( मदाय ) अस्मन्मोदाय भवतु

( इन्द्रस्य ) ऐश्वर्यवतस्तस्य ( सख्यम् ) मित्रताम् ( जुषाणः ) सेवमानः ( देवः ) विद्वान् ( इन्दुः ) प्रकाशस्वरूपः सन् सद्गतिं लभते ॥

पदार्थ—( अद्रिदुग्धः ) चित्तवृत्तियोंसे साक्षात्कार किया हुआ परमात्मा ( पवते ) हमको पवित्र करता है ( अध ) और ( मध्वा, धारया ) आनन्दकी धाराओंसे ( पृचानः ) विद्वानोंको तृप्त करता हुआ ( रोम, तिरः ) अज्ञानको तिरस्कृत करके हमको पवित्र करे और ( देवस्य ) उक्त दिव्यरूप परमात्माका ( मत्सरः ) आह्लादक जो आनन्द है वह ( मदाय ) हमारे मोदके लिये हो ( इन्द्रस्य ) ऐश्वर्य्यसम्पन्न परमात्माके ( सख्यम् ) मैत्रीभावको ( जुषाणः ) सेवन करता हुआ ( इन्दुः ) प्रकाशस्वरूप ( देवः ) विद्वान् सद्गतिको प्राप्त होता है ।

भावार्थ—अज्ञानकी निवृत्तिके लिये परमात्माकी उपासना सर्वोपरि साधन है ॥

अभि प्रियाणि पवते पुनानो
देवो देवान्त्स्वेन रसेन पृञ्चन् ।
इन्दुर्धर्माण्यृतुथा वसानो दश
क्षिपो अव्यत सानो अव्ये ॥ १२ ॥

अभि । प्रियाणि । पवते । पुनानः । देवः । देवान् । स्वेन । रसेन । पृञ्चन् । इंदुः । धर्माणि । ऋतुऽथा । वसानः । दश । क्षिपः । अव्यत । सानौ । अव्ये ॥

पदार्थः—( देवः ) परमात्मदेवः ( देवान् ) विदुषः ( स्वेन ) आत्मीयेन ( रसेन ) आनन्देन ( पृंचन् ) तर्पयन् (अभिप्रियाणि) सर्वान्प्रियपदार्थान् (पवते) पुनाति (पुनानः) सर्वान्पावयन् ( इन्दुः ) प्रकाशमयः सः ( धर्माणि ) वर्णाश्रमधर्मान्पृथक्कुर्वन् ( ऋतुथा ) सर्वर्तुषु ( वसानः ) निवसन् ( दश,-क्षिपः ) पञ्चस्थूलानि पञ्च च सूक्ष्माणि भूतानि तेषाम् ( अव्ये, सानौ ) ब्रह्माण्डरूपकार्ये विराजमानः ( अव्यत ) अस्मान्रक्षति।

पदार्थ—( देवः ) उक्त परमात्मारूप देव ( देवान् ) विद्वानोंको ( स्वेन ) अपने ( रसेन ) आनन्दसे ( पृञ्चन् ) तृप्त करता हुआ ( अभि प्रियाणि ) सब प्रिय पदार्थोंको ( पवते ) पवित्र करता है ( पुनानः ) सब को पवित्र करनेवाला परमात्मा ( इन्दुः ) जो प्रकाशस्वरूप है, वह ( धर्माणि ) वर्णाश्रमोंके धर्म्मोंको पृथक् २ विधान करता हुआ ( ऋतुथा ) सब ऋतु और देश कालोंमें ( वसानः ) निवास करता हुआ ( दश क्षिपः ) पांच स्थूल और पांच सूक्ष्म भूतोंके ( अव्ये, सानौ ) ब्रह्माण्डरूप इस कार्य्यमें विराजमान होकर ( अव्यत ) हमारी रक्षा करता है ॥

भावार्थ—परमात्मा सूत्रात्मारूपसे सब सूक्ष्म और स्थूल भूतोंमें विराजमान है, और उसीने आदिसृष्टिमें वर्णाश्रमोंका गुण, कर्म, स्वभाव द्वारा विभाग किया है ॥

वृषा शोणो अभिकनिक्रदद्गा
नदयन्नेति पृथिवीमुत द्याम् ।
इन्द्रस्येव वग्नुरा शृण्व आजौ
प्रचेतयन्नर्षति वाचमेमाम् ॥ १३ ॥

वृषा । शोणः । अभिऽकनिक्रदत् । गाः । नदयन् । एति । पृथिवीं । उत । द्यां । इंद्रःऽइव । वग्नुः । आ । शृण्वे । आजौ । प्रऽचेतयन् । अर्षति । वाचं । आ । इमां ॥

पदार्थः—( शोणः ) तेजस्वी सपरमात्मा ( वृषा ) आनन्दानां वर्षुकः ( गाः, अभि, कनिक्रदत् ) लोकलोकान्तराण्यभि शब्दायमानः ( द्याम् ) द्युलोकम् ( उत, पृथिवीम् ) भूलोकं च ( नदयन् ) समृद्धं कुर्वन् (एति) प्राप्नोति (आजौ) धर्मविषये जीवात्मानम् ( प्रचेतयन् ) बोधयन् ( इमां, वाचम् ) इमां वेदवाचम् ( अर्षति ) प्राप्नोति तस्य (वग्नुः) शब्दः ( इन्द्रइव ) विद्युदिव ( आ शृण्वे ) श्रूयते।

पदार्थ—( शोणः ) वह तेजस्वी परमात्मा ( वृषा ) आनन्दोंका वर्षक है ( गा, अभि, कनिक्रदत् ) लोकलोकान्तरोंके समक्ष शब्दायमान होता हुआ ( द्याम् ) द्युलोक ( उत ) और (पृथिवीम्) पृथिवीलोकको ( नदयन् ) समृद्धिको प्राप्त करता हुआ ( एति ) विराजमान होता है ( आजौ ) धर्म्म विषयमें जीवात्माको ( प्रचेतयन् ) बोधन कराता हुआ ( इमां, वाचम् ) इस वेदरूपी वाणीको ( अर्षति ) प्राप्त होता है और उसका ( वग्नुः ) शब्द ( इन्द्रइव ) विद्युत् के समान (शृण्वे ) सुना जाता है।

भावार्थ—सब आनन्दोंकी राशि एकमात्र परमात्माही है इसलिये उसीमें चित्तवृत्तिका निरोध करके ब्रह्मानन्दका उपभोग करना चाहिये।

रसाय्यः पयसा पिन्वमान  
ईरयन्नेषि मधुमन्तमंशुम् ।

पवमानः सन्तनिमेषि कृण्व-
न्निन्द्राय सोम परिषिच्यमानः ॥ १४ ॥

रसाय्यः । पयसा । पिन्वमानः । ईरयन् । एषि । मधुऽमंतं । अंशुं । पवमानः । संऽतनिं । एषि । कृण्वन् । इंद्राय । सोम । परिऽसिच्यमानः ॥

पदार्थः—( सोम ) हे परमात्मन् ! ( परिषिच्यमानः ) उपास्यमानो भवान् ( सन्तनिम् ) अभ्युदयं (कृण्वन्) विस्तृण्वन् ( इन्द्राय, एषि ) कर्म्मयोगिनं प्राप्नोति ( पवमानः ) सर्वस्य पावयिता भवान् ( पयसा, रसाय्यः ) रसेन परिपूर्णः (पिन्वानः) विविधाभ्युदयेन वृद्धिं प्राप्तो भवान् ( मधुमन्तम्, अंशुम् ) माधुर्य-युक्ताष्टसिद्धीः ( ईरयन् ) प्रेरयन् ( एषि ) प्राप्नोति ।

पदार्थ—( सोम ) हे परमात्मन् ! ( परिषिच्यमानः ) उपास्यमान आप ( सन्तनिम् ) अभ्युदयका (कृण्वन्) विस्तार करते हुए ( इन्द्राय ) कर्मयोगीके लिये ( एषि ) प्राप्त होते हैं ( पवमानः ) सबको पवित्र करने वाले आप ( पयसा रसाय्यः ) आनन्दस्वरूप हैं सब प्रकारके अभ्युदयोंसे ( पिन्वानः ) वृद्धिको प्राप्त आप ( मधुमन्तमंशुम् ) माधुर्य्ययुक्त अष्टसिद्धियों को ( ईरयन् ) प्रेरणा करते हुए ( एषि ) प्राप्त होते हैं ।

भावार्थ—अभ्युदय और निश्रेयसका प्रदाता एकमात्र परमात्माही है इसलिये मनुष्यको चाहिये कि उसी परमात्माको दृढ़ भक्तिसे सब प्रकारके ऐश्वर्य और मुक्तिको लाभकरे ।

एवा पवस्व मदिरो मदायो-
दग्राभस्य नमयन्वधस्नैः ।
परि वर्णं भरमाणो रुशन्तं
गव्युर्नो अर्ष परि सोम सिक्तः ॥१५॥१३॥

एव । पवस्व । मदिरः । मदाय । उद्ऽग्राभस्य । नमयन् । वधऽस्नैः । परि । वर्णं । भरमाणः । रुशंतं । गव्युः । न । अर्ष । परि । सोम । सिक्तः ॥

पदार्थः—( मदिरः ) हे आनन्दस्वरूपपरमात्मन् ! ( मदाय ) आनन्दाय ( उदग्राभस्य ) अज्ञानमेघान् ( वधस्नैः, नमयन् ) स्वबाधकशस्त्रैर्नम्रीकुर्वन् ( रुशन्तम् ) दीप्तिमत् ( गव्युः ) ज्ञानम् ( नः ) अस्मभ्यम् ( पर्यर्ष ) प्रयच्छतु ( सोम ) हे सौम्यगुणसम्पन्नभगवन् ! ( वर्णं, भरमाणः ) अस्मासु योग्यतां समुत्पादयन् ( परिषिक्तः ) ज्ञानप्रदो भवतु ।

पदार्थ—( मदिरः ) हे आनन्दस्वरूपपरमात्मन् ! ( मदाय ) हमारे आनन्दके लिये आप ( उदग्राभस्य ) अज्ञानके बादलको ( वधस्नैर्नमयन् ) अपने बाधक शस्त्रोंसे नम्र करते हुए ( रुशन्तम् ) दीप्तिवाले ( गव्युः ) ज्ञानको ( नः ) हमारे लिये ( पर्य्यर्ष ) प्रदान कीजिये। ( सोम ) हे सौम्यगुणसम्पन्नपरमात्मन् ! ( वर्णं भरमाणः ) हममें योग्यताको करते हुए आप ( परिसिक्तः ) हमारे लिये ज्ञानप्रद हूजिये ।

भावार्थ—जो लोग अनन्यभक्तिसे परमात्माका भजन करते

हैं परमात्मा उनके अज्ञानके वीजको छिन्न भिन्न करके अवश्यमेव ज्ञानका प्रकाश करता है ॥

जुष्ट्वी न इन्दो सुपथा सुगा-
न्युरौ पवस्व वरिवांसि कृण्वन् ।
घनेव विष्वग्दुरितानि विघ्नन्नधि
ष्णुना धन्व सानौ अव्ये ॥ १६ ॥

जुष्ट्वी । नः । इंदो इति । सुऽपथा । सुऽगानि । उरौ । पवस्व । वरिवांसि । कृण्वन् । घनाऽइव । विष्वक् । दुःऽइतानि । विऽघ्नन् । अधि । स्नुना । धन्व । सानौ । अव्ये ॥

पदार्थः—( इन्दो ) हेप्रकाशस्वरूपपरमात्मन् ! भवान् ( वरिवांसि ) धनानि ( कृण्वन् ) अस्मासु संचिन्वन् ( नः, पवस्व ) अस्मान् रक्षतु ( जुष्ट्वी ) मत्प्रार्थनाभिः प्रसन्नो भवान् ( सुपथा, सुगानि ) सुखगम्यानां वैदिकधर्ममार्गाणामुपदेष्टा भवतु ( उरौ ) विस्तीर्णे ( सानौ, अव्ये ) रक्षणपथे ( विष्वग्दुरितानि ) विषमादपिविषमं पापम् ( घना इव ) मेघानिव ( विघ्नन् ) नाशयन् ( स्नुना ) स्वीयानन्दमयधाराभिः ( अधि, धन्व ) प्राप्नोतु ।

पदार्थ—( इन्दो ) हे स्वप्रकाशपरमात्मन् ! आप ( वरिवांसि ) धनोंका प्रदान ( कृण्वन् ) करते हुए ( नः ) हमारी ( पवस्व ) रक्षा करें, और ( जुष्ट्वी ) हमारी प्रार्थनाओंसे प्रसन्न हुए आप ( सुपथा, ) सुन्दर

मार्ग और ( सुगानि ) सरलवैदिकधर्म्मके रास्तोंका उपदेश करें । ( उरौ ) विस्तीर्ण ( सानौ, अव्ये ) रक्षाके पथमें ( विष्वग्दुरितानि ) विषमसे विषम पापोंको ( घनाइव ) बादलोंके समान ( विघ्नन् ) नाश करते हुए ( ष्णुना ) अपनी आनन्दमय धाराओंसे ( अधिधन्व ) प्राप्त हों ।

भावार्थ—जो लोग परमात्माका प्रीतिसे सेवन करते हैं अर्थात् सर्वोपरि प्रिय एकमात्र परमात्माही जिनको प्रतीत होता है वे कर्मयोगी तथा ज्ञानयोगी होकर इस संसारमें स्वतन्त्रतापूर्वक विचरते हैं ॥

वृष्टिं नो अर्ष दिव्यां जिगत्नु-
मिळावतीं शङ्गयीं जीरदानुम् ।
स्तुकेव वीता धन्वा विचिन्वन्ब-
न्धूँरिमाँ अवराँ इन्दो वायून् ॥ १७ ॥

वृष्टिं । नः । अर्ष । दिव्यां । जिगत्नुं । इळाऽवतीं । शंऽगयीं । जीरऽदानुं । स्तुकाऽइव । वीता । धन्व । विऽचिन्वन् । बंधून् । इमान् । अवरान् । इंदो इति । वायून् ॥

पदार्थः—( इन्दो ) हे परमात्मन् ! ( नः ) अस्मभ्यम ( दिव्याम्, वृष्टिम ) दिव्यवर्षं ( अर्ष ) प्रयच्छतु या वृष्टिः ( जिगत्नुं ) सर्वत्र व्याप्ता ( इलावतीम ) अन्नप्रदा ( शंगयीम् ) सुखप्रदा ( जीरदानुम ) ऐश्वर्यप्रदा च स्यात् । भवांश्च ( वीता, स्तुका इव ) कान्तसन्ततीरिव ( विचिन्वन् ) उत्पादयन् ( इमान्, बन्धूनं ) इमान्बन्धुगणान् ( अवरान् ) देशदेशा-

न्तरस्थान् ( वायून् ) वायुमिव गतिशीलान् ( धन्व ) आगत्य प्राप्नोतु ॥

पदार्थ—हे परमात्मन् ! ( नः ) हमारे लिये आप ( दिव्याम् ) दिव्य ( वृष्टिम् ) वृष्टि ( अर्ष ) दें,-जो वृष्टि ( जिगत्नुं ) सर्वत्र व्याप्त हो ( इळावतीम् ) अन्नवाली हो ( शङ्गयीम् ) सुखप्रद हो ( जीरदानुम् ) शीघ्र ऐश्वर्यके देनेवाली हो और तुम (वीता, स्तुका, इव) सुन्दर सन्तानोंके समान ( विचिन्वन् ) उत्पन्न करते हुए ( इमान्, बन्धून् ) इस बन्धुगणको ( अवरान् ) जो देशदेशान्तरोंमें स्थिर है, और ( वायून् ) वायुके समान गतिशील है, उसको ( धन्व ) आकर प्राप्त हो ।

भावार्थ—यद्यपि परमात्मा स्वस्वकर्मानुकूल ऊँच नीच गतिप्रदान करता है, तथापि वह सन्तानोंके समान जीवमात्रकी भलाई चाहता है इसलिये कर्मों द्वारा सुधार करके सबको शुभमार्गमें प्रेरित करता है ।

ग्रन्थिं न वि ष्य ग्रथितं पुनान
ऋजुं च गातुं वृजिनं च सोम ।
अत्यो न क्रदो हरिरा सृजानो
मर्यो देव धन्व पस्त्यावान् ॥ १८ ॥

ग्रंथिं । न । वि । स्य । ग्रथितं । पुनानः । ऋजुं । च । गातुं । वृजिनं । च । सोम । अत्यः । न । क्रदः । हरिः । आ । सृजानः । मर्यः । देव । धन्व । पस्त्यऽवान् ॥

पदार्थः—हे परमात्मन् ! ( ग्रथितम् ) बद्धपुरुषाणाम् ( पुनानः ) मुक्तिदो भवान् ( नः ) अस्माकम् ( ग्रन्थिम् )

बन्धनम् ( विष्य ) मोचयतु ( च ) तथा ( गातुम् ) मन्मार्गम् ( ऋजुम् ) सुगमं करोतु ( सोम ) हे सौम्यस्वभाव ! ( वृजिनं, च ) बलं च सम्पादयतु ( अत्यो न ) विद्युच्छक्तिरिव ( क्रदः ) शब्दकारी भवान् ( आ, सृजानः ) उत्पतिकाले सर्वस्रष्टा ( हरिः ) प्रलये च हरणकर्ताऽस्ति ( देव ) हे भगवन् ! ( पस्त्यवान् ) अन्यायिशत्रूणां ( मर्यः ) नाशकः ( धन्व ) मदन्तःकरणं शोधयतु ।

**पदार्थ**—हे परमात्मन् ! (ग्रथितम्) बद्धपुरुषोंके (पुनानः) मुक्तिदाता आप ( नः ) हमारे ( ग्रन्थिम् ) बन्धनको ( विष्य ) मोचन करें ( च ) और ( गातुम् ) हमारे मार्गको ( ऋजुम् ) सरल करें । ( सोम ) हे परमात्मन् ! ( च ) तथा ( वृजिनम् ) हमको बलप्रदान करें ( अत्योन ) विद्युत्की शक्तिके समान ( क्रदः ) आप शब्दायमान हैं ( आ, सृजानः ) उत्पत्तिकालमें सबके स्रष्टा है, और प्रलयकालमें ( हरिः ) सबके हरणकर्त्ता हैं । ( देव ) हे देव ! ( पस्त्यवान् ) अन्यायकारी शत्रुओंके ( मर्यः ) आप नाशक हैं, ( धन्व ) आप हमारे अन्तःकरणोंको शुद्ध करें ।

**भावार्थ**—परमात्मा स्वभावसे न्यायकारी है वह आप उपासकोंके अन्तःकरणको शुद्धिप्रदान करता है । और अनाचारियोंको रुद्ररूपसे विनाश करता हुआ इस संसारमें धर्म और नीतिको स्थापन करता है ।

जुष्टो मदाय देवतात इन्दो परि
ष्णुना धन्व सानो अव्ये ।
सहस्रधारः सुरभिरदब्धः परि
स्रव वाजसातौ नृषह्ये ॥ १९ ॥

जुष्टः । मदाय । देवऽताते । इंदो इति । परि । स्नुना । धन्व । सानौ । अव्ये । सहस्रऽधारः । सुरभिः । अदब्धः । परि । स्रव । वाजऽसातौ । नृऽसह्ये ॥

पदार्थः—( सहस्रधारः ) अनन्तशक्तिरीश्वरः ( सुरभिः, अदब्दः ) केनापि अनभिभाव्यः ( वाजसातौ ) यज्ञे ( नृषह्ये ) मनुष्याणा तपोबलस्योन्नेताऽस्ति ( अव्ये, सानौ ) रक्षारूपस्य स्वस्योच्चशिखरे ( ष्णुना ) स्वप्रवाहैः ( इन्दो ) हे परमात्मन् ! ( धन्व, पवस्व ) भवान् आगत्य पावयतु, यतः ( देवताते ) विदुषां विस्तृतयज्ञे ( मदाय ) आनन्दस्य ( जुष्टः ) प्रीत्याऽनुभवितास्ति भवान् ।

पदार्थ—( सहस्रधारः ) अनन्तशक्तियुक्तपरमात्मा (सुरभिरदब्धः) किसी से न दबाये जानेवाला ( वाजसातौ ) यज्ञमें ( नृषह्ये ) जो मनुष्योंके तपोबलका वर्धक है, और ( अव्ये ) सबका रक्षक है ( सानौ ) रक्षा रूप उच्च शिखरपर ( ष्णुना ) अपने प्रवाहसे ( इन्दो ) हे प्रकाशस्वरूप-परमात्मन् ! तुम ( धन्व, पवस्व ) हमको पवित्र करो, क्योंकि, आप ( देवताते ) विद्वानोंके विस्तृतयज्ञमें ( मदाय ) आनन्दको ( जुष्टः ) प्रीतिसे सेवन करनेवाले हैं, ॥

भावार्थ—जो लोग परमात्मपरायण होते हैं परमात्मा उनकी सदैव रक्षा करता है ॥

अरश्मानो येऽरथा अयुक्ता अत्या-
सो न संसृजानासं आजौ ।

एते शुक्रासो धन्वन्ति सोमा
देवासस्ताँ उप याता पिबध्यै ॥२०॥१४॥

अरस्मानः । ये । अरथाः । अयुक्ताः । अत्यासः । न । समृजानासः । आजौ । एते । शुक्रासः । धन्वंति । सोमाः । देवासः । तान् । उप । यात । पिबध्यै ॥

**पदार्थः**— ( आजौ ) ज्ञानयज्ञे ये विद्वांसः ( ससृजानासः ) दीक्षिताः कृताः ( अत्यासः, न ) विद्युदिव ये (अयुक्ताः) निर्बन्धनाः ( अरस्मानः ) ये च जीवन्तो मुक्ताः सन्तः(अरथाः) कर्मबन्धरहिताः ( एते, शुक्रासः) एते पूर्वोक्तविद्वासः ( धन्वन्ति) अव्याहतगतयः सन्तः विचरन्ति ( सोमाः, देवासः ) सौम्या दिव्याश्च ये परमात्मनो गुणकर्मस्वभावाः ( तान् ) तान्स्वभावान् ( पिवध्यै, उपयात ) सेवितुं प्रयतन्ता विद्वांसः ।

**पदार्थ**—( आजा ) ज्ञानयज्ञोंमें जो विद्वान् ( ससृजानासः ) दीक्षित कियेगये हैं ( अत्यासः ) विद्युत्के ( नः ) समान जो ( अयुक्ताः ) वन्धनरहित हैं, (अरश्मानः ) जीवन्मुक्त होते हुए ये जो ( अरथाः ) कर्मोंके वन्धनोंसे रहित हैं ( एते शुक्रासः ) उक्ततेजस्वी विद्वान् ( धन्वन्ति ) अव्याहतगति होकर सर्वत्र विचरते हैं । ( सोमाः ) सौम्य ( देवासः ) दिव्य जो परमात्माके गुणकर्मस्वभाव हैं ( तान् ) उनको ( पिवध्यै, उपयात ) विद्वानोंसे प्रार्थना है कि आपलोग उक्तपरमात्मा के गुणोंको सेवन करने का प्रयत्न करें ।

**भावार्थ**— इस मन्त्रमें परमात्माके गुणकर्मस्वभावके सेवन

